मा[1]हेश्वरः स भवति विश्वरूपाभिधः प्रिये ।
एतेऽपि केरले देवि [2]ह्यन्तर्भूता भवन्ति वै ॥ १७२ ॥
एवं ज्ञानेन सम्पन्नः[3] कुंडलीज्ञानपूर्वकम् ।
पूजनं तु[4] प्रकर्त्तव्यं नान्यथा सिध्यति ध्रवम् ॥ १७३ ॥
एतदज्ञानतो देवि न विद्या[5] सिद्धिमाप्नुयात् ।
विद्यासिद्धिमभीप्सुर्वै ज्ञानपूर्वं समाचरेत् ॥ १७४ ॥
अज्ञानात्[6] यत्कृतं देवि तत् सर्वं निष्फलं भवेत् ।
इति संक्षेपतः प्रोक्तमवश्यं क्रियतां प्रिये[7] ॥ १७५ ॥
बलिदानविधौ देवि पात्रासादनकर्म्मणि ।
विनियोगविधौ सर्वं स्पष्ट भवति नान्यथा ॥ १७६ ॥

**श्रीशिव उवाच**

अथ किं पृच्छसि शिवे काश्मीरं ब्रूहि सत्वरम् ।
सर्वदिव्यस्तु यः प्रोक्तः स काश्मीरेति कीर्तितः ॥ १७७ ॥
भावनाथः क्रियानाथो ज्ञाननाथस्तथैव च ।
चित्परः चे[8]तनेशश्च सिद्धनाथाख्य एव च ॥ १७८ ॥
ऋद्धि[9]नाथस्ततश्चैव इत्यष्टौ कीर्तिता मया ।
पूजनादौ महेशानि पात्रासा[10]दनकर्म्मणि ॥ १७९ ॥
भेद एष महेशानि सर्वमेकं[11] प्रकीर्तितम् ।
गौडाख्यमार्गो देवेशि तथा काश्मीरसम्मतम् ॥ १८० ॥
केरलेऽन्तर्गतं देवि नान्यथा शाङ्करं वचः ।
क्वचित् कदाचित् भेदो वै सम्प्रदायात्प्रकीर्त्तितः ॥ १८१ ॥
त्रिजटैकजटा चोभे[12] त्रिशूली बिन्दुभूषितः ।
चतुर्भेदा महेशानि शैवेऽत्रान्तर्गता भवेत् ॥ १८२ ॥
शैवे चान्तर्गता देवि श्रीमत्पाशुपतादयः ।
तेषां तु सप्तभेदा वै तानहं वच्मि संशृणु ॥ १८३ ॥
आदौ शिखी ततो[13] मुण्डी जटी चैव तृतीयकः ।
द्विदण्डी त्वेकदण्डी च त्रिदण्डी च[14] ततः स्मृतः ॥ १८४ ॥
वीरशैवः सप्तमस्तु सप्तपाशुपताः स्मृताः[15] ।
वैष्णवे त्वष्टभेदाः स्युस्त्वादौ[16] वैखानसः स्मृतः ॥ १८५ ॥
श्रीराधावल्लभो देवि गोकुलेश[17]स्तृतीयकः ।
वृंदाख्यस्तु चतुर्थः स्यात् पांचरात्रस्तु पंचमम् ॥ १८६ ॥

---

1. B म° । 2. B त्व° । 3. B संमन्त्र्य । 4. B तत् । 5. B नावद्या । 6. B °ने । 7. N शिवे । 8. B चै° । 9. B क्रोध° । 10. CN °त्रोत्सा° । 11. CN °मेत्र । 12. C °जटश्चैव । 13. B था । 14. CN च त्रिदण्डी च एकदण्डी । 15. N मताः । 16. B स्कान्दो, 17. B श्रीविष्णुस्त्वादि देवेशि केरलेश° ।

वीरवैष्णवनामाख्यस्तदन्यः परिकीर्त्तितः ।
रामानन्दी हरिव्यासी निम्बार्कश्चाष्टमः स्मृतः[1] ॥ १८७ ॥
स्मार्त्ता भागवता देवि एते मार्गप्रवर्त्तकाः ।
शाक्ते चान्तर्गता देवि चीनाः कापालिकाः शिवे ॥ १८८ ॥
बौद्धा जैनास्ततो[2] देवि दिव्याः कौलास्तथा शिवे[3] ।
वीरः पशुस्ततः प्रोक्तस्तेषा लक्षणमुच्यते ॥ १८९ ॥
चीनाना द्विशतं भेदास्ताराच्छिन्नाविधौ स तु ।
ताराधीशः पराधीशः क्षेमाख्यः प्रेमतारकः[4] ॥ १९० ॥
सागराख्यः परापन्नस्तथा[5] जीवदयापरः ।
चिरंजीवी सिद्धनामा संक्षेपान्नाव[6]कीर्त्तितः ॥ १९१ ॥
कापालिके पंचभेदास्तानहो ब्रूमहे शिवे ।
इंद्रजाली देवजाली रुद्रजाली तृतीयकः ॥ १९२ ॥
विद्याजाली तुर्यसंख्यः[7] पंचमः सिद्धिजालिकः[8] ।
पंचकापालिकाः प्रोक्ता बौद्धान् संशृणु यत्नतः ॥ १९३ ॥
केशच्छेदी वृक्षच्छेदी मद्याशी कल्मषस्तथा ।
इच्छाभेदी पंचमस्तु एवं बहुविधा मताः ॥ १९४ ॥
जैने भेदद्वयं देवि कथ्यते यत्नतः शृणु ।
पार्श्वनाथः कलानाथः पद्माभोगवतीरतः ॥ १९५ ॥
आदिदिव्यस्तूपदिव्यो दिव्यभेदद्वयं शिवे ।
पशवस्त्रिविधा देवि ज्ञाताज्ञातविनिन्दकाः ॥ १९६ ॥
पंचधा वीर इत्युक्तस्तद्भेदं शृणु पार्वति ।
श्रीचक्रवीरो देवेशि ऊर्मिलाख्यो द्वितीयकः ॥ १९७ ॥
चूडाचक्रं तृतीयं स्यात्पुष्पचक्रं चतुर्थकम् ।
जीवचक्रं पंचमं स्यात्पंचभेदाः प्रकीर्तिताः ॥ १९८ ॥
भावयोगो[9] जीवचक्रे पुष्पचक्रे क्रि[10]याभिधः ।
श्रीचक्रे ज्ञानयोगस्तु लययोगस्तु [ऊर्मिले][11] ॥ १९९ ॥
चूडाचक्रे राजयोगो[12] किमन्यच्छ्रोतुमिच्छसि ।

**श्रीदेव्युवाच ।**

देवेश श्रोतुमिच्छामि पूर्वोक्तं चातिगुप्त[13]कम् ॥ २०० ॥

**श्रीशिव उवाच ।**

कीटात् ब्रह्माण्डपर्य्यन्तं सर्वशक्तिमयं जगत् ।
शक्तिसंपूजनाद्देवि ब्रह्माण्डं पूजितं भवेत् ॥ २०१ ॥

---

1. CN °श्च तृतीयकः । 2. C °था । 3. C थैव च । 4. B प्रेतारभूः । 5. B °भस्तु तथा । 6. CN °ञ्च च । 7. C °ज्ञः । 8. B सिद्धजालक. । 9. B °गी, C °गे । 10. C त्र° । 11. B कर्मिणा; NC कर्मणां । 12. C °योगे । 13. CN °ह्य° ।

शक्त्या शिवस्य वै देहे भुवनानि चतुर्दश ।
लोकत्रयं कलास्थाने देवलोकादिकं शिवे ॥ २०२ ॥

पर्वता धातवो[1] वापी समुद्राः सरितस्तथा ।
ब्रह्माण्डगोलके यच्च यत् किंचिज्जगतीतले ॥ २०३ ॥

तत्समस्तं शक्तिदेहे स्फुटं[2] तिष्ठति पार्वति ।
ब्रह्मा विष्णुश्च रुद्रश्च शक्तिदे[3]हसमुद्भवाः ।
इति संक्षेपतः प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ॥ २०४ ॥

इति श्रीशक्तिसङ्गमहातन्त्रराजे उत्तरभागे तृतीयखण्डे श्रीमदक्षोभ्यमहोग्रतारासंवादे श्रीचक्रयोगादिकथनं नाम प्रथमः पटलः ।

1. B क्रमतो; N ऋतवो । 2. C स्थूलं । 3. B गे° ।

## द्वितीयः पटलः

**श्रीदेव्युवाच ।**

पूर्वोक्तं वद देवेश यद्यहं तव वल्लभा ।

**श्रीशिव उवाच ।**

धनकामे गणपतिमारोग्ये च दिवाकरम् ॥ १ ॥
तारापति च[1] श्रीकामे मुक्तिकामे जनार्द्दनम् ।
नारायणं सर्वकामे श्रीकामे पुरुषोत्तमम् ॥ २ ॥
मन्त्री मन्त्रप्र[2]सिद्ध्यै श्रीं विद्यार्थी कालिकां यजेत् ।
मातङ्गीं धनकामस्तु वाराही सर्वकामया[3] ॥ ३ ॥
भुवनेशीं राज्यकामः तथा नीलसरस्वतीम् ।
तथा त्रि[4]पुरमेवं च कूटे कूटविभाविनीम्[5] ॥ ४ ॥
सर्वकामं कलियुगे कृते च पुरुषोत्तमम् ।
द्वापरे शिवभेदं च त्रेतायां वामनं हरिम् ॥ ५ ॥
अथ कलियुगे शस्ता[7] या बालेति निगद्यते ।
त्रेतायां ललिता शस्ता[8] द्वापरे पंचकूटगा ॥ ६ ॥
षट्कू[9]टा च कलौ शस्ता सर्वतंत्रेषु गोपिता ।
सर्वकामं कलियुगे सुन्दरी परमेश्वरि ॥ ७ ॥
बगला सर्वसिद्ध्यर्थं स्तंभनार्थं विशेषतः ।
धूमावती मारणार्थे शरभो निग्रहे[10] मतः ॥ ८ ॥
प्रत्यङ्गिरा अग्न्यस्त्रादिनिग्र[11]हार्थं प्रकीर्त्तिता ।

**श्रीशिव उवाच ।**

अन्यत्तऽहं प्रवक्ष्यामि यद्यज्जानामि देवते ॥ ९ ॥
भूतिकामस्तु सततं पूजयेत्त्रिपुरां कलौ ।
कालिकां च महामायां वाणी[12]कामस्तु[13] चार्चयेत् ॥ १० ॥
[14]भुवनेशीं तथा तारां स्वर्गकामस्तु[15] चार्च[16]येत् ।
ब्रह्मवर्चसकामश्च ब्रह्माणं परिपूजयेत् ॥ ११ ॥
आरोग्यकामोऽथ रविं धनकामो हुताशनम् ।
कमलां सिद्धिकामस्तु विद्याकामः सरस्वतीम् ॥ १२ ॥

---

1. N °तिश्च । 2. C °श्च । 3. B °योः । 4. B त्रै° । 5. B °भिः । 6. CN आद्या । 7 B सक्ता । 8. C °क्ता । 9. C °क° । 10. C° हतो । 11. B विष° । 12. C काली । 13. CN °मेन । 14. C omits this line. 15. B °कामो न । 16. B पूज° ।

कलौ नीलपताकां[1] च तथा नीलसरस्वतीम्।
वाक्सिद्धिर्जायते[2] शीघ्रं कामसिद्धिर्न संशयः॥ १३॥
कर्मणां[3] सिद्धिकामस्तु[4] पूजयेद्वै विनायकम्।
भोगकामस्तु शशिनं बलकामः समीरणम्॥ १४॥
विमुक्त्यै सर्वसंसारात् [5]प्रयत्नेनार्चयेच्छिवम्।
ध्यानयोगं तथा मोक्षं यदीच्छेद्बुद्धा[6]नमव्ययम्॥ १५॥
सोऽर्चयेच्च विरूपाक्षं सर्वसत्त्वमयं हरम्।
छिन्नमस्तां राजपूर्वां मातंगीं कामकालिकाम्॥ १६॥
श्मशानकालिकां देवि सर्वसिद्धिप्रदां यजेत्।
अश्वारूढां कुक्कुटीं च तथा भोगवतीं शिवे॥ १७॥
नित्यक्लिन्नां[7] च भेरुण्डां स्त्रीवश्यार्थं यजेत्[8] प्रिये।
सर्वाकर्षणकामस्तु कालिकैकाक्षरीं यजेत्॥ १८॥
तथा मधुमतीं विद्यां सर्वाकृष्टौ[9] यजेत्प्रिये।
पराप्रासादविद्यां च तथा षट्शाम्भवेश्वरीम्॥ १९॥
सर्वकामप्रसिद्ध्यर्थं यजेद्यत्नेन सुन्दरीम्।
धनदा ऋद्धिकामेन सिद्धिकामेन कामिनी॥ २०॥
भैरवी रूपकामेन हयग्रीवस्तु वाक्प्रदः[10]।

**श्रीशिव उवाच।**

दीक्षापरंपरामाह येन देवीमयो भवेत्॥ २१॥
गौडकाश्मीरद्रविडे[11]कौले वामे च[12] दक्षिणे।
सर्वत्र योजनीया हि यथामार्गेण सुन्दरी॥ २२॥
अधिकारवशाद्देवि कलौ पापसमन्विते।
कलौ युगे च सं[13]प्राप्ते सर्वे भ्रष्टा भवन्ति हि॥ २३॥
परंपराविनाशस्तु भविष्यति न संशयः।
गुरुक्षोभं[14] विमुख्यं[15] च नातः[16] सिद्धिः प्रवर्तते॥ २४॥
अज्ञानवशतो देवि भ्रमन्ति हि इतस्ततः।
मार्गभ्रष्टास्तथा जाता शाखारण्डा[17] यथा मताः॥ २५॥
कोटिसंख्ययुगैर्वापि न ते वै सिद्धिभागिनः।
दीक्षापरंपरां वक्ष्ये श्रीविद्यायां महेश्वरि॥ २६॥

---

1 C °ग। 2. B °र्जपतो। 3. C °णा। 4. B °मेन। 5. C यद्य। 6. C °स्था°। 7. C °च्छिन्नां। 8. B °पेत्। 9. B सर्वोत्कर्षे। 10. C °प्रियं। 11. C °ड। 12. CN °षु। 13. C सर्व°। 14. CN ज्ञानं। 15. C °मोक्षं। 16. CN ततः। 17. C °त्वङ्गं।

कालिकायामपि तथा गौडकाश्मीरभेदतः ।
अथातः[1] संप्रवक्ष्यामि श्रीविद्याभेददीक्षणम् ॥ २७ ॥
लब्धाधिकारिभिर्देवि बालोपास्या महेश्वरि ।
पूर्णाधिकारिभिर्देवि कामसंपूजिता परा ॥ २८ ॥
तदुत्तरं षोडशी स्यात्पराविद्या तदुत्तरम् ।
पराप्रासादविद्या स्यात्प्रासादपररूपिणी ॥ २९ ॥
संप्रदायानुसारेण दीक्षणं कारयेत् प्रिये ।
षट्शाम्भवं ततः प्रोक्तं संप्रदायानुसारतः ॥ ३० ॥
चरणदीक्षा ततः प्रोक्ता त्वितो दीक्षा न विद्यते ।
[2]निर्वाणदीक्षा देवेशि सर्वतश्चोत्तमा मता ॥ ३१ ॥
निर्वाणदीक्षापरतो नान्यदीक्षा तु विद्यते ।
निर्वाणदीक्षया युक्तः परं ब्रह्म न संशयः ॥ ३२ ॥
चरणत्रयदीक्षा तु क्वचित् कार्य्या महेश्वरि ।
बालामं[3]त्रादिका मंत्रा विद्यामंत्रैव[4] कीर्त्तिताः ॥ ३३ ॥
या सा पंचदशी देवी षोडशी सैव कीर्तिता ।
षोढान्यासादिकं चैव अष्टादश सहस्रकम् ॥ ३४ ॥
न्यासा यत्नेन कर्त्तव्या नामपारायणं तथा ।
पराप्रासादविद्यायां[5] सर्वमेव प्रकीर्त्तितम् ॥ ३५ ॥
कालनित्यादिकं चैव युग[6]पर्य्यायनित्यकाः ।
मंत्रपारायणं कर्म नाडीपारायणं तथा ॥ ३६ ॥
षोडशीविद्यया युक्तस्त्वधिकारी[7] हि सर्वतः ।
षडन्वयक्रमे दीक्षा न्यासपूजादिकं शिवे ॥ ३७ ॥
भिन्नमेव[8] पुरा प्रोक्तं विशेषः कथ्यते पुनः ।
चतुश्चरणदीक्षायां भिन्नं न्यासादिकं मतम् ॥ ३८ ॥
पराप्रासादविद्यायां विशेषः कुत्रचित्प्रिये ।
सर्वेषां पूजनं देवि श्रीचक्रे परिकीर्तितम् ॥ ३९ ॥
अधिकारानुसारेण योजनीयं महेश्वरि ।
सर्वदीक्षादिभिर्युक्तो महादेवो न संशयः ॥ ४० ॥
उत्तरोत्तरमेतद्धि श्रेष्ठं विद्धि महेश्वरि ।
एतज्ज्ञानवशाद्देवि साक्षाद्ब्रह्ममयो भवेत् ॥ ४१ ॥

---

1. B °न्यः । 2. B omits two lines. 3. B °य° । 4. CN भिन्नैव
5. CN °याः । 6. B पुरा । 7. B °रो । 8. B मया एव ।

आदावेकाक्षरी प्रोक्ता बालावत् परिकीर्त्तिता।
सिद्ध[1]काली पंचदशी विद्यावत्[2] परिकीर्तिता॥ ४२॥
अथ वै दीक्षणाकाली षोडशी सैव कीर्त्तिता।
ततः कामकला काली पराप्रासादवन्मता॥ ४३॥
चरणदीक्षा यथा प्रोक्ता तथैव हंसकालिका।
ततस्तु गुह्यकाकाली षट्शाम्भवपरेश्वरि[3]॥ ४४॥
षट्शाम्भवे गुह्यकाल्यां भिन्न[4] एव प्रकीर्त्तितः।
अत्रापि कालनित्यादि ज्ञानं प्रोक्तं मया तव॥ ४५॥
मंत्रपारायणं देवि नामपारायणं तथा।
नाडीपारायणं चैव युगनित्यादिकं शिवे॥ ४६॥
कालनित्यादिकं चैव दिन[5]नित्यादिकं तथा।
सर्वं विस्तरतो देवि मया पूर्वं निवेदितम्॥ ४७॥
काल्यां तु युगनित्यादि कालनित्यानुसारतः।
विंशत्साहस्रकं चाष्टशती षट्त्रिंशदीरिता॥ ४८॥
कालनित्याविधानादि साधनं[6] कथ्यते पुनः।
इत्येतत्कथितं देवि संक्षेपेण मया तव॥ ४९॥
एतद्विधानवाँल्लोके सिद्धिरूपो न संशयः।
पूर्णाभिषेकदीक्षायां नामपारायणं चरेत्॥ ५०॥
शैवे शैवान्तगं नाम[7] वैष्णवे तु तदन्तगम्।
सौरगाणपबौद्धादौ तत्तच्छा[8]स्त्रोक्तनामत[9]ः॥ ५१॥
शाक्ते शक्त्यन्तगं नाम शाक्ते बाहुल्यमीरितम्।
श्रीमच्छाम्भवदीक्षादौ शाम्भवो[10] ह्यत्र सम्मतः॥ ५२॥
तद्रश्मिगं च वा नाम गुरुमध्यस्थितं च वा।
ऋ[11]तुद्वैविध्यगं वापि यथाम्नायक्रमेण तु॥ ५३॥
शिवशक्तियुग्मभेदान्मालामन्त्रस्थमेव तु।
षोडश्यां पञ्चदश्यां च लोपामन्वगस्तिके शिवे॥ ५४॥
ए[12]तद्गुरुप्रोक्तनाम देयं यत्नेन[13] दीक्षणे।
पराप्रासादमध्ये तु प्रासादपरयाऽथ वा॥ ५५॥
शिवशक्त्यन्तगं नाम शैवशक्त्यन्तगं[14] च वा[15]।
निर्वाणाद्यंतगं[16] नाम चरणे तद्गुरुस्थितम्॥ ५६॥

---

1. C °द्धि°। 2. B °न्तं। 3. B °वी परमेश्वरि। 4. B मित्र। 5. B रिक्त°। 6. B °यन्तं। 7. B सौरे शैवे गणनाथ। 8. B मन्त्रशा°। 9. CN तु। 10. C °वे। 11. B क्र°। 12. B स। 13. B कन्दर्पपल°। 14. B °र्गतं। 15. C °शक्त्या न कंचन। 16. C °द्यगतं।

मेधायां तद्गुरुस्थं च प्रोक्तमेतन्महेश्वरि ।
अथान्यत् संप्रवक्ष्यामि सारात्सारतरं परम् ॥ ५७ ॥

श्रीदेव्युवाच ।

शापोद्धारोत्कीलने तु तत्र भेदः कियान् भवेत् ।
तन्मे वद महादेव यद्यहं तव वल्लभा ॥ ५८ ॥

श्रीशिव उवाच ।

उत्कीलनं बन्धनं स्यात् शापस्तेजोनिरोधकः ।
कीलने तु महादेवि न गतागतमीरितम् ॥ ५९ ॥
गतागतं महादेवि शापोद्धारे तु वर्त्तते[1] ।
भक्तानुग्रहकाम्यत्वाद्देवीसाधकसन्निधौ ॥ ६० ॥
गत्वा[2] दत्तो वरो देवि स मृषा जात एव हि ।
मंत्रचैतन्यरोधत्वान्मृषा जातो महेश्वरि ॥ ६१ ॥
अयं शापो निगदितस्तथो[3]त्कीलनमुच्यते ।
भक्तानुग्रहकाम्यत्वाद्दातव्यो हि वरः शिवे ॥ ६२ ॥
बंधनस्य यदा मुक्तिस्तदैव तु गतागतम् ।
शक्तिस्तु वर्तते देव्या[4] वरदाने महेश्वरि ॥ ६३ ॥
यथा ऊर्जतरे[5] वत्से धेनुप्रीतिस्तु वर्तते ।
बंधनस्य यदा मुक्तिस्तनपानं तदैव हि ॥ ६४ ॥
काली तारा तथा छिन्ना तेजःपुंजनिभा मता ।
त्रयाणां तेजःसंरोधं को हि कर्तुं क्षमो भवेत् ॥ ६५ ॥
तस्माच्छापादिकं नास्ति कालिकायां महेश्वरि ।
कालिका तारिणी विद्या उत्कीलनविमोचनी ॥ ६६ ॥
दामसंत्रो[6]टनं कृत्वा धेनुर्याति यथा सुतम् ।
भक्तानुग्रहकाम्यत्वात्तथेयं कालिका परा ॥ ६७ ॥
तारा छिन्ना स्तंभनेशी सर्वबंधविमोचनी ।
शापे[7] तु प्रस्रवो[8] नास्ति कीलने प्रस्र[9]वोऽस्ति हि ॥ ६८ ॥
कालिकायां महादेवि सर्वदा प्रस्र[10]वोऽस्ति हि ।
शापोद्धारनिरुक्तिस्तु शृणु यत्नेन सांप्रतम् ॥ ६९ ॥
वत्सो निकटवर्ती स्याद्धेनुर्निकटवर्तिनी ।
दुग्धा[11]भावान्महादेवि[12] नैकट्ये किं फलं भवेत् ॥ ७० ॥

---

1. CN °ऽनुवर्तने । 2. N °ता । 3. B °यो° । 4. B सर्वतो दत्वा । 5. C °थोत्तरतरे । N ऊर° । 6. N °त्रा° । 7. C पापे । 8. C °स्तुतो । 9. B °स्त° । 10. B °स्त° । 11. B द्विधा° । 12. B महेशानि ।

कालांतरे समायाते पुनर्दुग्धं[1] यथा भवेत् ।
शापनिर्मोचनादेव पुनस्तेजः प्रवर्तते ॥ ७१ ॥
वत्सबंधनमुक्तित्वात्फलं[2] सिद्धं हि वर्तते ।
उत्कीलने बंधनं हि फलसिद्धिप्रदा[3] प्रिये ॥ ७२ ॥
तस्मादुत्कीलनं[4] भिन्नं[5] शापो भिन्नः प्रकीर्तितः ।
अक्षरव्यत्ययो देवि उत्कीलनविधौ स्मृतः ॥ ७३ ॥
मंत्रश्चै[6]तन्यरूपत्वात् चैतन्यव्यत्ययो न च[7] ।
चैतन्यव्यत्ययं त्यक्त्वा पापभागी[8] नरो भवेत् ॥ ७४ ॥
तत्पापस्य निवृत्त्यर्थं प्राणायामः प्रकीर्तितः ।
देहावयवरूपत्वं ह्यक्षरे वर्तते शिवे ॥ ७५ ॥
अक्षरव्यत्ययाद्देवि हीनांगत्वं[9] प्रजायते ।
शापहीने[10] महादेवि [11]सर्वांगं सिद्धमेव हि ॥ ७६ ॥
वत्सबंधनकं कर्म पुनः सिद्धं यथा भवेत् ।
तथोत्कीलनकं कर्म पुनः सिद्धं महेश्वरि ॥ ७७ ॥
शापदाने महादेवि चैतन्याभाव एव हि ।
विद्यमाना यथा गौर्वै दुग्धं नास्ति महेश्वरि ॥ ७८ ॥
शापदाने महेशानि चैतन्यं नास्ति शांभवि ।
उत्कीलने महादेवि चैतन्यं सिद्धमेव हि ॥ ७९ ॥
इति भेदेन गदितो[12] किमन्यच्छ्रोतुमिच्छसि ।

**श्रीदेव्युवाच ।**

दीपरेखादिकं कर्म पूर्वं य[13]त्सूचितं त्वया ॥ ८० ॥
किमपराद्धं मया देव न तन्मह्यं प्रकटीकृतम् ।

**श्रीशिव उवाच ।**

दीपरेखादिकं[14] ज्ञानं सारात्सारतरं मतम् ॥ ८१ ॥
दीपिन्यन्योक्तिसिध्यर्थं दीपरेखा प्रकीर्तिता ।
आरभ्य भानोरुदयात्षष्टिर्वि[15]घटिकांतरम्[16] ॥ ८२ ॥
सृष्टिसंहारयोगेन दीपरेखाविधिर्मता ।
बिंदुमारभ्य हो[17]रान्तं दीपिनी समुदेति हि ॥ ८३ ॥
सर्वमं[18]त्राणि देवेशि दीपिनी समुदेति हि ।
घटिक्रमेण देवेशि तत्र मंत्रोदयो भवेत् ॥ ८४ ॥

---

1 B °र्बन्धो । 2. B °त्प्रत्नं । 3. C °द्धिस्तथा; N °द्धिः सदा । 4. B °ने । 5. B °न्नं । 6. C ° चै ° । 7. C नव । 8. C यावन्मानी । 9 B °गं हि । 10. CN दाने । 11. C omits सर्वाङ्गं......महादेवि in the fourth line. 12. CN° तौ । 13. CN सं° । 14. CN °वि° । 15. CN ° वैं । 16. CN °का भवेत् । V. 82 is repeated in B. 17. N हा° । 18. CN यं° ।

मन्त्रमात्रे त्विदं प्रोक्तं मया[1] संकेतकं शिवे ।
एकाक्षरं[2] समारभ्य सहस्रांतं महेश्वरि ॥ ८५ ॥
अक्षरे चोदयं देवि [3]घटिकाक्रमयोगतः ।
तत्राक्षरं सदोदेति[4] तज्ज्ञानात्फलमाप्नुयात् ॥ ८६ ॥
हंसचारो महा[5]देवि यथा चलति सर्वदा ।
अजपा सैव गदि[6]ता संकल्पात्तु फलप्रदा[7] ॥ ८७ ॥
युगाद्यारंभदिवसं ज्ञात्वा चाहर्गणं शिवे ।
मंत्राक्षरोदयं देवि विद्धि यत्र[8] सुनिश्चितम् ॥ ८८ ॥
एकैकघटिकायोगाद्बिन्दुरेखोदयाक्षरम् ।
हो[9]रांतं यत्नतो देवि ज्ञातव्यं शुभमिच्छता ॥ ८९ ॥
ह्रारमारभ्य बिन्द्वन्तं पुनरेको[10]दयाक्षरम् ।
एवं[11] व्याप्तेन देवेशि विराड्रूपत्वतां व्रजेत् ॥ ९० ॥
[12]व्यापकत्वं विना देवि न[13] विराड्रूपता मता ।
विश्वरूपत्वभावो हि विराड्रूपे प्रकीर्तितः ॥ ९१ ॥
दीपरेखां विना देवि न हि वै दीपिनी[14] मता[15] ।
दीपरेखामध्यभागे दीपिनी समुदेति हि ॥ ९२ ॥
तत्रैव दीपिनीं पूज्य तत्रैव चोदया[16]क्षरम् ।
उदयाक्षरयोगेन[17] सजीवं मंत्रमेव हि ॥ ९३ ॥
विनोदयाक्षरं देवि मंत्रं निःशापकं न हि ।
मंत्रशापनिवृत्त्यर्थं उदयाक्षरचिन्तनम् ॥ ९४ ॥
मंत्रोदयाक्षरं देवि तथा रेखोदयो भवेत् ।
उदयाक्षरयोगेन किं न सिध्यति भूतले ॥ ९५ ॥
मन्त्रोदयो[18] यथा देवि तथा रेखोदयो[19] भवेत् ।
रेखोदयो मन्त्रमात्रे स्यादु[20]दयोऽपि हि वर्त्तते ॥ ९६ ॥
इति प्रोक्तं मया देवि किमन्यच्छ्रोतुमिच्छसि ।

**श्रीदेव्युवाच ।**

पूर्वं संसूचितं नाथ यन्त्र[21]ध्यानं त्वया प्रभो ॥ ९७ ॥

---

1. B मुपा° । 2. B सकाशरं । 3. C omits घटिका......सुनिश्चितं in the sixth line. 4. B सदा देवि । 5. N यथा । 6. N कथि° । 7. N °लं यथा । 8. N पत्रे । 9. BN ह्रा° । 10. B °खो° । 11. B सर्वं° । 12. C omits this line. 13. B सनादे । 14. C वेदाधिनी । 15. B repeats this line. 16. C °ना° । 17. C omits सजीवं... °योगेन in the fifth line. 18. C °या । 19. C °यात् । 20. N °त्रस्यो° । 21. C तत्र ।

कथं ध्येयं [1]किं विशिष्टं किं ध्येयाध्येयमेव हि ।
वृत्तं भित्तिस्वरूपं वा मेखलावत्स्वरूपकम् ॥ ९८ ॥
किं वा रेखामयं ध्येयं किं वा मेरुस्वरूपकम् ।
विश्वरूपं स्मरेद्वापि तत्सर्वं मयि[2] कथ्यताम्[3] ॥ ९९ ॥

श्रीशिव उवाच ।

ध्यानं तु त्रिविधं प्रोक्तं यन्त्रमात्रे महेश्वरि ।
आदौ विराट्स्वरूपं स्याद्विश्वचक्षुःस्व[4]रूपिणम् ॥ १०० ॥
[5]यन्त्रं सम्भावयेद्देवि सर्वत्र कथितं त्विदम्[6] ।
श्रीचक्रादौ महादेवि विराड्रूपे तु[7] साम्यता ॥ १०१ ॥
द्वितीयन्तु कथं ध्येयं तन्मे वद महेश्वरि ।
तेजःपुञ्जनिभा रेखा सर्वचैतन्यरूपिणी ॥ १०२ ॥
सर्वं दर्पणवद्भाव्यं स्वप्रकाशस्वरूपिणम् ।
चैतन्यं भावयेत् सर्वं बिन्द्वादिभू[8]पुरान्तकम् ॥ १०३ ॥
मूले तेजः[9]प्रकाशेन नाभिन्नं[10] भावयेत्प्रिये ।
तृतीयं शृणु देवेशि मेरु[11]रूपं सनातनम् ॥ १०४ ॥
उत्तरोत्तरबीजं च बिन्द्वारभ्य विभावयेत् ।
बिन्द्वधो भावयेद्देवि चैकैको[12]त्तरतः शिवे ॥ १०५ ॥
नवोत्तरक्रमेणैव भावयेद्वा महेश्वरि ।
कालीविद्याविधौ देवि नवरत्नस्वरूपिणी ॥ १०६ ॥
रेखाः संभावयेद्देवि मेरुप्रस्तारवच्च वा[13] ।
श्रीचक्रं बीजसंयुक्तं निःशस्तं परमेश्वरि ॥ १०७ ॥
बीजहीनं तु यच्चक्रं तच्चक्रं सिद्धिदं न च ।
सृष्टिचक्रं भवेदादौ स्थितिचक्रं द्वितीयकम् ॥ १०८ ॥
लय[14]चक्रं तृतीयं स्यात्त्रिधा चक्रं निवेदितम् ।[15]
बीजसंलेखनं देवि त्रिविधं गदितं मया ॥ १०९ ॥
बीजं विना[16] तु निर्जीवं शववत्परिकीर्तितम् ।
बीजयुक्तं भवेद्यंत्रं निःशस्तं सिद्धिदायकम् ॥ ११० ॥
बीजाभावे मातृकार्णान् संलिखेद्बिन्दुभूषितान् ।
यंत्रमध्ये तु संलिख्य तद्यंत्रं पूजयेच्छिवे ॥ १११ ॥

---

1. B omits किं......स्मरे° in the fourth line. 2. C °यि । 3. C has कथ्यतां शृणु साम्प्रतम् । 4. B °श्वं च सुख° । 5. C omits this line. 6. B °ह । 7. C न । 8. C विश्वादित्रि° । 9. B मूलमन्त्र° । 10. B नामिमां । 11. B प्रेम° । 12. B चक्रैको° । 13. B या । 14. B °व° । 15. B शिवेरितं । 16. N विभा° ।

दलाकारं तु यद्यंत्रं तद्यंत्रं सिद्धिदायकम्।
दलाकारं कलौ पूज्यं नान्यथा सिद्धिदं शिवे ॥ ११२ ॥
मंत्रचैतन्यकं देवि यंत्रचैतन्यकं तथा।
गुरुचैतन्यकं देवि स्वस्मिंस्त्रितयभावना ॥ ११३ ॥
[1]न तत्र ध्यानरूपादि तेजःपुंजविभावना।
सप्रपञ्चे तु निःसारे दुराचारव्रते शिवे ॥ ११४ ॥
भावनैव तु संप्रोक्ता भावना सिद्धिदा मता।
भावना यदि सिद्धा न तदेतन्तु[2] कथं भवेत् ॥ ११५ ॥
भावनाप्रेरणं देवि दै[3]वेन क्रियते शिवे।
प्रत्ययं शृणु देवेशि यत्सर्वैः[4] क्रियते सदा ॥ ११६ ॥
कुण्डली भिन्नरूपा स्यात्तल्लिंगं भिन्नरूपिणम्।
स्वयम्भुलिङ्गमित्युक्तं स्वतःसिद्धं महेश्वरि ॥ ११७ ॥
मूलविद्यामयी देवि कुण्डली शक्तिरूपिणी।
कुण्डली सर्प[5]रूपा स्याद्देवता भिन्न[6]रूपिणी ॥ ११८ ॥
शिवस्या[7]भिन्नरूपत्वात्त्रि[8]धा रूपं प्रकीर्तितम्।
मूलाधारं[9] तु कुंडल्याः स्थानं प्रोक्तं महेश्वरि ॥ ११९ ॥
श्रीदेवतायाः स्थानं तु हृदयं परिकीर्तितम्।
शिवस्थानं[10] महेशानि सहस्रारं प्रकीर्तितम् ॥ १२० ॥
स्थानभेदान्नामभेदाद्रूपभेदान्महेश्वरि।
कथमैक्यं[11] महादेवि तस्मात्तु भावना मता ॥ १२१ ॥
स्थानभेदे रूपभेदे नामभेदे न वै मम।
तात्पर्यं विद्यते देवि किं तु चैतन्यभावना ॥ १२२ ॥
गुरुमुख्याः क्रियाः सर्वा निर्वाणं गुरुरूपकम्।
निर्वाणं परमं ब्रह्म[12] निर्वाणं तु गुरोः पदम् ॥ १२३ ॥
गुरुः शक्तिर्गुरुर्विद्या गुरुर्देवो महेश्वरः।
गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्वि[13]राट्स्वरूपवान् ॥ १२४ ॥
गुरुर्मंत्रो हि चैतन्यं किं बहु ब्रह्म केवलम्।
चैतन्यमेव[14] तात्पर्यं ध्यानं तु[15] भावनैव हि ॥ १२५ ॥
केन दृष्टं ध्यानरूपं भावनामात्रगोचरम[16]।
दृढभावनया युक्ते प्रत्यक्षं दर्शनं भवेत् ॥ १२६ ॥

---

1. B omits this line. 2. B °दं तु। 3. B दे°। 4. N °र्वैः। 5. C °म°। 6. B °मन्त्र°। 7. CN °स्य। 8. CN °त्वं त्रि°। 9. B °र। 10. C °ने। 11. B °मेका। 12. B भूमिः। 13. B °रुः स्व°। 14. CN मात्रे। 15. B तत्। 16. B °रा।

चैतन्यं सर्वदा भाव्यं गुरौ देवि न संशयः ।
गुरुं विना[1] न विद्याप्तिर्न च मंत्राप्तिरेव च ॥ १२७ ॥

गुरुस्थानं[2] श्रेष्ठभूतं गुरौ[3] सर्वस्य[4] भावना ।
गुरुदैवतमंत्राणामैक्यं संभावयन् धिया ॥ १२८ ॥

मंत्रार्थं हृदि निश्चित्य गुरुरूपं परामृशन् ।
सर्वं गुरौ वि[5]लीनं वै ज्ञात्वा तु प्रजेपत्प्रिये ॥ १२९ ॥

स्वाभिन्नत्वेन संभाव्य त्रितयं त्रितयं त्रिषु ।
सर्वचक्षुः सर्वमुखं सर्वस्यै[6]व स्वरूपिणम् ॥ १३० ॥

गुरुमेव विजानीयाद्गुरुं ध्यायन्ज[7]पं चरेत् ।
मया पूर्वं निगदितं भावत्रितयकं शिवे ॥ १३१ ॥

पशुवीरदिव्यभावाद्विन्ये किं वै निरूपितम् ।
तेजःपुञ्जं विभाव्याऽथ सर्वमेकस्वरूपकम् ॥ १३२ ॥

चैतन्यं च विभाव्याऽथ महातेजः स्मरेच्छिवे ।
गुरुकृपा[8] भवेद्देवि देव[9]रूपो गुरुः स्मृतः ॥ १३३ ॥

गुरुरूपो भवेदात्मा आत्मरूपो मनुर्भवेत् ।
मंत्ररूपं तु सकलं विभाव्य मूर्तिकल्पना ॥ १३४ ॥

ध्यानोक्ता[10] देवतां ध्यात्वा सर्वं संसाधयेत् क्षणात् ।
एवं भावनया देवि ताद्रूप्यत्वं प्रजा[11]यते ॥ १३५ ॥

ताद्रूप्ये तु समापन्ने[12] परशक्तित्वतां व्रजेत् ।
परशक्तिस्वरूपोऽहमिति संभाव्यमव्ययम् ॥ १३६ ॥

चैतन्यमूर्तिं संचिन्त्य किं न सिध्यति भूतले ।
त्रयाणामेकगं तेजस्तत्र मूर्तिप्रकल्पना ॥ १३७ ॥

ध्यानोक्तदेवतां ध्यात्वा स्वस्वरूपां विभावयेत् ।
त्रितयं त्रिषु संभाव्य तत्रेष्टमूर्तिकल्पना ॥ १३८ ॥

मनःस्थैर्यं[13] यथा देवि तथा कार्यं महेश्वरि ।
तस्याः समरसं देवि[14] तेजःपुंजनिभं[15] स्मरेत् ॥ १३९ ॥

अर्धनारीश्वरमपि[16] मंत्रचैतन्यविग्रहम्[17] ।
न देहे मंत्रवर्णान् स्वे[18] व्याप्तान्वै भावयेत्सुधीः ॥ १४० ॥

---

1. B विद्या । 2. C °ने । 3. B °रुः । 4. N °स्व° । 5. B °रोर्वि° । 6. CN °स्वे° । 7. N °त्वा ज° । 8. C °पादात् । 9. N °वी° । 10. B °क्त° । 11. B °भा° । 12 B संभावना । 13. B स्थैव । 14. CN °स्मात्समरसानन्द° । 15. B °भां । 16. CN °यी । 17. B °हान् । 18. CN °न्वै ।

वनमालासमां भाव्य तेजःपुंजनिभां शिवे ।
इति संक्षेपतः प्रोक्तं यथा कुण्डलीरूपकम् ॥ १४१ ॥

कुण्डलीत्रितये[1] देवि यथा संभाव्यते शिवे ।
तथाऽत्र भावना प्रोक्ता किमन्यच्छ्रोतुमिच्छसि ॥ १४२ ॥

इति श्रीशक्तिसङ्गममहातन्त्रराजे उत्तरभागे तृतीयखण्डे श्रीमदक्षोभ्यमहोग्रतारासंवादे उदयाक्षर[2]निरूपणं नाम द्वितीयः पटलः ।

1. B °यं । 2. CN °रादि°

## तृतीयः पटलः ।

### श्रीदेव्युवाच ।

देवाधिदेव सर्वज्ञ सर्वशास्त्रप्रवर्त[1]क ।
मंत्रोदयादिकं ज्ञानं दीपरेखादिकं प्रिये ॥ १ ॥
भावनान्तं च कथितं पूर्वोक्तं न प्रकाशितम् ।

### श्रीशिव उवाच ।

तदेव कथ्यतेदानीं शृणु यत्नेन साम्प्रतम् ॥ २ ॥
केरलाख्यमतं[2] चैकं काश्मीरं तु द्वितीयकम् ।
गौडसंज्ञं तृतीयं स्यान्मतं तु भावनाविधौ ॥ ३ ॥
आदौ तु केरलं[3] देवि शुद्धं सर्वेषु सम्मतम् ।
गुरुदै[4]वतमंत्राणामैक्यं सभावयन् धिया ॥ ४ ॥
चैतन्यं तु त्रयाणां च[5] तेजःपुंजं विभावयेत् ।
उपदेष्टा गुरुर्देवि[6] मन्त्रे[7] चैतन्यबोधनम्[8] ॥ ५ ॥
चैतन्यस्य स्वरूपं वै गुरुरूपं विभावयेत्[9] ।
नवरत्नप्रभा देवि यथा चैकत्र योज्यते ॥ ६ ॥
एक[10]त्र योजनादेव ज्वलन्मेरुसमप्रभाम् ।
एकत्र योजनाद्देवि[11] कोटिसूर्यसमप्रभाम् ॥ ७ ॥
तत्प्रभायां महादेवि[12] गुरुं शम्भुस्वरूपिणम् ।
वराभयकरं शान्तं द्विनेत्रं द्विभुजं गुरुम् ॥ ८ ॥
त[13]त्तेजसा विलीनं हि जगत्स्थावरजंगमम् ।
केरलाख्ये सम्प्रदाये एवं[14] संभावयेद्गुरुम् ॥ ९ ॥
गुरुमुख्याः क्रियाः सर्वास्तस्मात्सर्वोत्तमो[15] गुरुः ।
काश्मीराख्यं शृणु प्राज्ञे येन तन्मयतां व्रजेत् ॥ १० ॥
मंत्रदेवगुरूणा हि त्वैक्यं[16] संभावयन्[17] धिया ।
तेजःपुंजनिभं सर्वं ह्यक्षरस्य स्वरूपकम् ॥ ११ ॥
तेजःपुंजाक्षराणि च सर्वं[18] चैकत्र भावयेत् ।
सर्वं[19] लीनं ह्यक्षरे वै चैतन्यत्रितयं शिवे ॥ १२ ॥
सर्वं चैतन्यजं तेजः कोटिसूर्यसमप्रभाम् ।
तेजःपुंजाक्षराण्येव रत्नकूट[20]समूहवत् ॥ १३ ॥

---

1. B °दर्श° । 2. C °ख्यं शतं । 3. B °ले । 4. C °द° । 5. B मया देवि; C चै । 6. C °वे । 7. N °न्त्र° । 8 N °भावने । 9. B महेश्वरि । 10. B सर्व° । 11. N °द्देवे, C °द्देवि । 12. B °देव । 13. CN य° । 14. B सर्वं । 15. B °रो । 16. B त्वेकं । 17. B °वयेत् । 18. B °वें । 19. B °वें । 20. B °कण्ठ° ।

संभाव्य प्रजपेन्मंत्रमिष्टसिद्धिप्रदायकम् ।
काश्मीराख्यक्रमः प्रोक्तो गौडक्रम[1]मतः शृणु ॥ १४ ॥
देवतागुरुमंत्राणामैक्यं संभावयन् धिया[2]।
सर्वं तेजोमयं भाव्यं जगत्स्थावरजंगमम् ॥ १५ ॥
त्रयाणां देवि चैतन्यं तेजःपुंजनिभं शिवे ।
तेजःकूटमभूदेकं मेरुपर्वतसंनिभम् ॥ १६ ॥
तत्तेजसि महादेवी[3] सायुधां परिचिन्तयेत् ।
ध्यानोक्तविधिना ध्यात्वा सर्वरूपां विभावयेत् ॥ १७ ॥
एवं भावयतस्तस्य देवता वरदा भवेत् ।
इयं[4] वै भावना प्रोक्ता किमन्यच्छ्रोतुमिच्छसि ॥ १८ ॥

**श्रीदेव्युवाच ।**

सम्प्रदायत्रये[5]णैव संकल्पो यस्तु सूचितः ।
स च वै कथ्यतां देव यद्यहं तव वल्लभा ॥ १९ ॥

**श्रीशिव उवाच ।**

केरलाख्ये सम्प्रदाये संकल्पं शृणु सादरम् ।
प्रीत्यर्थं[6] देवतायास्तु संकल्पः परिकीर्तितः ॥ २० ॥
देवताया यदा प्रीतिर्जा[7]ता तत्क्षणमेव तु[8] ।
प्रसन्नता[9] भवेदादौ ततः प्रीतिः प्रवर्तते ॥ २१ ॥
प्रीतिर्जाता यदा देवि प्रसन्नत्वे न संशयः ।
प्रीत्यर्थे[10] विनियोगस्तु मुख्योऽयं[11] परिकीर्तितः ॥ २२ ॥
काश्मीराख्ये क्रमे देवि विनियोगं शृणु प्रिये ।
प्रत्यक्षदर्शनार्थं हि देवताया महेश्वरि ॥ २३ ॥
गौडक्रमे महेशानि सर्वसिध्यर्थमेव तु ।
देवताया यदा प्रीतिस्तदा सर्वं प्रवर्तते ॥ २४ ॥
प्रत्यक्षदर्शनं देवि प्रीतौ लीनं हि[12] वर्तते ।
तथा[13] वाक्यादिसंसिद्धिः प्रीतौ लीना हि वर्तते ॥ २५ ॥
तस्मात्प्रीतिर्मुख्यभूता प्रीत्यर्थं विनियोगता ।
इति प्रोक्तं[14] महादेवि किमन्यच्छ्रोतुमिच्छसि ॥ २६ ॥

**श्रीदेव्युवाच ।**

देवेश श्रोतुमिच्छामि नित्या पंचविधा कथम्[15] ।

**श्रीशिव उवाच ।**

शृणु देवि प्रवक्ष्यामि कालनित्यासु निर्णयम् ॥ २७ ॥

---

1. B °मार्ग° । 2. B शिवे । 3. B °वि । 4. N इति । 5. B क्रमे° । 6 B °र्थे । 7. B भाति जि° । 8. B तत् । 9. B °न्नासा । 10. CN °र्थं । 11 B °ख्याये । 12. B °नाद्धि । 13. B तद्ध्यान° । 14. B प्रीतिरुक्ता । 15. B °यकं ।

तिथिनित्या भवेदादौ [ दिन ][1]नित्या तदुत्तरम् ।
युगनित्या ततः प्रोक्ता कालनित्या मता ततः[2] ॥ २८ ॥
ततः पर्यायनित्या स्यादेवं पंचविधा मता ।
शुक्लकृष्णक्रमेणैव द्विधा नित्या[3]र्चनं मतम् ॥ २९ ॥
आदौ कामेश्वरी शुक्ले चित्राद्या कृष्णपक्षके ।
तिथिनित्या समभ्यर्च्य द्वाभ्यामाद्यां ततः प्रिये ॥ ३० ॥
पुनराद्यन्तमाचर्य दक्षिणामूर्तिसंमतम् ।
आनन्दभैरवमते प्रथमे[4] दिननित्यकाम् ॥ ३१ ॥
शुक्लकृष्णक्रमेणैव तदन्ते सकलां यजेत्[5] ।
तिथिनित्या तु कथिता [दिन]नित्यापुरःसरम्[6] ॥ ३२ ॥
युगनित्या तु कथिता कालनित्या च पूर्ववत् ॥ ३३ ॥
पर्यायनित्या देवेशि कालनित्यापुरःसरम् ।
कथ्यते शृणु देवेशि सावधानमनाः शृणु ॥ ३४ ॥
शून्यसर्गौ[7] समुद्धृत्य ततः कामकला वदेत् ।
हंसः सोऽहं समुद्धृत्य पर्यायः कथ्यते शृणु ॥ ३५ ॥
अकारादिक्षकारान्तै उ अ इ पल्लवान्वितैः ।
परस्परान्वितैर्देवि द्वित्रिक्रमगतैः[8] शुभैः ॥ ३६ ॥
स्वरादिभिरथोपात्तै[9]स्तैश्च तैश्च स्वरान्वितैः[10] ।
परस्परं पल्लवितैर्नामपारायणाभिधा ॥ ३७ ॥
पर्यायनित्या कथिता कालनित्यान्विता शुभा ।
पर्यायस्वजर्नैर्देवि कालनित्याप्र[11]काशतः ॥ ३८ ॥
तत्तत्पारायणं नाम कीर्तितं देव[12]दुर्लभम् ।
कालिकायां महेशानि नित्यापर्यायनामतः ॥ ३९ ॥
काली पर्यायनित्या वै संक्षेपेण प्रकाशिता ।
विंशत्साहस्रकं भाग[13]शतषट्त्रि[14]शदीरिता ॥ ४० ॥
अत्रेत्थं[15] केचिदिच्छन्ति नागे सप्तशतीति च ।
अक्षरोदयकं यत्ते[16]ऽनेकमेव[17] प्रकीर्तितम् ॥ ४१ ॥
षष्टिपारायणं नाम पूर्वमेव प्रकीर्तितम् ।
नामपारायणं भिन्नं[18] मंत्रपारायणं तथा ॥ ४२ ॥

---

1. MSS नित्या° । 2. N सनातनः । 3 CN °विद्या° । 4. N °मं । 5. B °लं पठेत् । 6. After this B repeats the line शुक्लकृष्ण......पठेत् । 7. B °र्गा, C °र्गो । 8. B प्रभागर्भैः । 9. CN °थरूपान्तैः । 10. B °पाचितैः । 11. B स° । 12. B °वि. । 13. CN °मार्ग° । 14. C °वे° । 15. C omits this line. 16. B बले, C यत्ने । 17. B तथा कर्म । 18. B मन्त्रं ।

मंत्रपारायणं नाम भिन्नमे[1]व प्रकीर्तितम् ।
अक्षरोदयः षष्ठितमस्त्वेक एव प्रकीर्तितः ॥ ४३ ॥

कालीपारायणं नाम कीर्तितं तव सुव्रते ।
सुन्दर्या भिन्नमेवोक्तं तच्छृणु त्वं महेश्वरि ॥ ४४ ॥

आ ई पल्लवसंयुक्तैः परस्परयुतैः शिवे ।
द्वित्रिक्रमाक्षरैः[2] काद्यैः क्षान्तवर्णगतैः[3] शिवे ॥ ४५ ॥

स्वरादिभिरथ क्षान्तैस्तैश्च तैः सस्वरैः शिवे ।
नामानि त्रिपुरे ते हि[4] गणितैः[5] सभवंति हि ॥ ४६ ॥

विंशत्साहस्रकं साष्टशतं षट्त्रिंशदेव हि ।
गुह्यातिगुह्यं कथितं यन्न कुत्र प्रकाशितम् ॥ ४७ ॥

अकारः प्रथमो वा हि आ[6]कारः प्रथमोऽथ वा ।
अकारः प्रथमो देवि ह्याकारस्तदनन्तरम् ॥ ४८ ॥

विराड्[7]रूपं तु प्रथमं ततः सावयवा मता ।
विराड्रूपं[8] कालिकाख्यं सुन्दरं सुन्दरीमुखम्[9] ॥ ४९ ॥

तस्मादकारो मुख्यो हि स तु काली[10]विधौ मतः ।
कादि[11]वर्णः कालिकायां हादिः श्रीसुन्दरीमते[12] ॥ ५० ॥

वर्णस्वरूपे तद्रूपं[13] न मदीयं तु विद्य[14]ते ।
कादिर्विराट् शून्यरूपः ककारः परिकीर्त्तितः ॥ ५१ ॥

हादिर्हकारः श्रीविद्या चित्कला कामसुन्दरी ।
महाकामकला विद्या हकारे तु विराजते[15] ॥ ५२ ॥

विराट्स्वरूपं सुन्दर्या विद्यामात्रे[16] प्रकीर्त्तितम् ।
तथापि काल्या देवेशि मुख्यत्वेन व्यवस्थितम्[17] ॥ ५३ ॥

नामपारायणे[18] देवि तत्स्वरूपं प्रदृश्यते ।
अकारो बिन्दुसंयुक्तो अकारः सर्गसंयुतः ॥ ५४ ॥

अं-अ-श्चेत्यक्षर[19]द्वन्द्वमनुत्तरस्वरूपकम् ।
अनुत्तरा द्विपंचाशद्विद्याख्या[20] परिकीर्त्तिता ॥ ५५ ॥

एवं कामकला विद्या मत[21]भेदेन दर्शिता[22] ।
ईकारः केवलो देवि महाकाम[23]कला मता ॥ ५६ ॥

---

1. B मन्त्राने° । 2. B स्वरै° । 3. B ज्ञातवर्णं गतं । 4 B देहि । 5. B °ते । 6. C ह्या° । 7. C वियद्° । 8. B °पे । 9. B सदा सुंदरा सुस्वने । 10. B बाले । 11. B °ली° । 12. B °मनौ । 13 CN तात्पर्यं । 14. BN वर्त्त° । 15. B °जिता । 16. B °त्रं । 17. B °ता । 18. B °णं । 19. C °चेत्तरतः । 20. C द्विग्विद्याख्या । 21. B तत्तद्° । 22. B तत्स्मृता । 23. N °ल° ।

अत एव कामराजे ककारत्वे तु[1] मुख्यता ।
लोपायां तु हकारो हि त्वाकारत्वेन कीर्तितः ॥ ५७ ॥
कृत्वा हरार्द्धं[2] देवेशि यो ध्यायेत् जगदम्बिकाम् ।
मंत्रद्वयेन पुटितं सर्वाभिन्नत्वभावना ॥ ५८ ॥
नामपारायणं प्रोक्तं[3]कालीविद्याविधौ शिवे ।
अत एव तु सम्प्रोक्तं चित्स्वरूपं[4] महेश्वरि ॥ ५९ ॥
अकारः प्रथमो देवि[5] ह्याकारस्तु द्वितीयकः ।
आकारो[6] व्यापकत्वेन सर्वव्यापक ईरितः ॥ ६० ॥
हकारा[7]ऽर्धकला देवि ईकारः परिकीर्तितः ।
एवं मिलित्वा देवेशि महाराजेश्वरी परा ॥ ६१ ॥
महाराजेश्वरीविद्यापल्लवः परमो मतः ।
श्रीविद्याया महेशानि प्रोक्तं संक्षेपतः शिवे ॥ ६२ ॥
विराडुत्तरेश्वरी विद्या कालिकायां प्रकीर्तिता ।
अकारस्तु ककारे[8]ऽपि हकारेऽपि[9] प्रकीर्तितः ॥ ६३ ॥
अकारोच्चारणं देवि न कादौ हादिसम्मतम्[10] ।
उभयोर्यत्र चे[11]त्कूटं कूटार्थे परिकीर्तितम् ॥ ६४ ॥
कूटोच्चारणकं कर्म[12]कलौ कस्य भविष्यति ।
तस्मादुच्चारणार्थं हि ह्यकारः परिकीर्तितः ॥ ६५ ॥
ककारस्त्वादिवर्णो हि हकारश्चरमो मतः[13] ।
अत्रार्थे प्रत्ययो देवि वर्णोद्धारे भविष्यति ॥ ६६ ॥
कहेत्येवं महामन्त्रो यस्य वाचि प्रवर्तते ।
स धन्यः स च विज्ञानी स हि वै देवपूजितः ॥ ६७ ॥
प्रणामं कुर्यात्तं दृष्ट्वा ज्ञानात्फलमवाप्नुयात् ।
अज्ञानात्फल[14]नाशः स्यात्किमन्यच्छ्रोतुमिच्छसि ॥ ६८ ॥

**श्रीदेव्युवाच ।**

षष्ठीजप[15]प्रकारोऽपि[16] नामपारायणं तथा ।
मंत्रपारायणं देव ह्यक्षरोदयकं[17] तथा ॥ ६९ ॥
दीपरेखादिविज्ञानं मंत्रार्णस्योदयं तथा ।
क[18]स्याधिकारो दे[19]वेश केन कार्यं स को भवेत् ॥ ७० ॥

---

1. CN °त्वेन । 2 C °द्वै; N °र्द्धं । 3. C omits काल°...संप्रोक्त in the next line. 4. CN चिद्रूप च । 5. C विद्या । 6. B अकारे । 7. B °रो° । 8. B °रो । 9. BC omit. 10. B °ते । 11. B चि° । 12. C omits कलौ...°कीर्त्तितः in the next line. 13. B श्चान्त्यो ततः । 14. B द्वै तु । 15. B °छेर्ज° । 16. B. हि । 17. C तर्पकं । 18. C अ° । 19. B °रादे° ।

तन्मे वद महादेव यद्यहं तव वल्लभा ।

**श्रीशिव उवाच ।**

पूर्णाभिषेकी शुद्धान्तो गुरुभक्तो दृढव्रतः ॥ ७१ ॥
अनित्यकर्मसन्त्यागी नित्यानुष्ठानतत्परः ।
पारम्पर्यक्रमासक्तः षट्शांभवान्तमेव हि ॥ ७२ ॥
सन्ध्याचतुष्टये देवि ह्यधिकारो हि यस्य वै ।
आचार्यत्वे महादेवि अधिकारो हि[1] यस्य वै ॥ ७३ ॥
भविष्यज्ज्ञानत्रैकाल्यज्ञानविज्ञानदर्शने ।
बाला पंचदशी[2]कादि षोढा[3]विद्या परा ततः[4] ॥ ७४ ॥
पराप्रासादनिर्वाणौ षडन्वयक्रमस्ततः ।
एवं परम्परायुक्ते नामसंज्ञादिसंयुते ॥ ७५ ॥
तस्याधिकारो देवेशि नामपारायणादिके ।
षष्ठीजपं समारभ्य नाममन्त्रान्तिके शिवे ॥ ७६ ॥
एवं पारायणं कर्म यः करोति महेश्वरि ।
स च किं मानुषो देवि स साक्षाच्छिव एव हि ॥ ७७ ॥
षष्ठीपारायणं नाम नामपारायणं तथा ।
मंत्रपारायणं ज्ञानं दीपरेखादिकं तथा[5] ॥ ७८ ॥
नामदानादिसंकेतो नाल्पस्य कर्मणः फलम् ।
येन कोटियुगं देवि सुन्दरी सम्यगर्चिता ॥ ७९ ॥
अष्टादशसहस्रं हि न्यासान्येन स्वदेहके ।
पुरश्चर्यादिसंयुक्तैर्न्यस्ता देवेशवन्दिता ॥ ८० ॥
तेनेदं लभ्यते देवि ह्यथवा नहि लभ्यते ।
एतत्तत्त्वं महेशानि किंचिज्जानामि यत्नतः ॥ ८१ ॥
पूर्णवेत्ता महादेवि स साक्षात्का[6]लिकाम्बिका ।
सैव वै सुन्दरीरूपा तारुण्यामृतविग्रहा ॥ ८२ ॥
जानाति सुन्दरी देवि सा त्वमेव महेश्वरि ।
सर्वं गोपयसि प्राज्ञे मम[7] भाग्यं[8] महत्तरम् ॥ ८३ ॥

**श्रीदेव्युवाच ।**

धन्योऽसि शिव विश्वेश सर्वपारप्रदर्शक ।
शक्तौ शिवं विना शम्भो[9] सामरस्यं न दृश्यते ॥ ८४ ॥

**श्रीशिव उवाच ।**

भेदो नास्ति महादेवि यथा बीजाङ्कुरो भवेत् ।
सैवाहं पुंस्वरूपेण स्त्रीरूपेणाहमेव हि ॥ ८५ ॥

---

1. C °रोऽपि । 2. B °ह्वर्ण° । 3. B भेदा° । 4. B रजः । 5. B शिवे । 6. B त्कौ° । 7. B मया । 8. B °ग्ये । 9. B °म्भौ ।

आवाभ्यां न हि भेदोऽस्ति भेदस्त्वज्ञानसम्भवः ।
उपदिष्टोऽस्मि देवेशि ह्यनुत्तरगुणार्णवे ॥ ८६ ॥

त्वत्प्रसादादिदं सर्वं न वै[1] विस्मृतमेव हि ।
इति संक्षेपतः प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ॥ ८७ ॥

**श्रीदेव्युवाच ।**

पूर्वं संसूचितं नाथ स्वप्नमन्त्र[2]विवेचनम् ।
[3]न मह्यं कथितं नाथ मम वा योग्यता न हि ॥ ८८ ॥

सर्वं मे कथ्यतां देव यद्यहं तव वल्लभा ।

**श्रीशिव उवाच ।**

एतावत्कालपर्यन्तं न कुत्रापि प्रकाशितम् ॥ ८९ ॥

तव प्रीत्या महेशानि कथ्यते शृणु साम्प्रतम् ।
पञ्चाशद्वै महापद्मा ह्या[4]गमग्रन्था ईरिताः ॥ ९० ॥

तत्र मन्त्रा महादेवि सर्वेषु च[5] प्रतिष्ठिताः ।
त्रिंशन्निखर्वषड्वृन्दनवत्यर्बुदकोटयः ॥ ९१ ॥

मन्त्राः प्रोक्ता महेशानि ह्यागमं कुत्र किं स्थितम् ।
तत् शृणु त्वं महेशानि यद्यहं तव वल्लभः ॥ ९२ ॥

महत्पंचाशत्पद्मे[6] तु षट्विंशति भुवि स्थितम्[7] ।
चतुर्दश स्थितं स्वर्गे दश पातालगोचरम् ॥ ९३ ॥

एवं क्रमेण देवेशि ह्यागमः कथितो मया ।
स्वप्नमंत्रा महादेवि त्रिधा वै परिनिष्ठिताः ॥ ९४ ॥

पाताले तु विराट्चक्रं स्वर्गे ताण्डवचक्रकम् ।
स्वर्गे चक्रद्वयं देवि त्रिपुराख्यं द्वितीयकम् ॥ ९५ ॥

आदौ विराट् ततो देवि शिवताण्डवमेव च ।
तृती[8]यं त्रिपुराख्यं तु स्वप्नमंत्रास्त्रिधा स्थिताः ॥ ९६ ॥

तत्रैव तु हृदन्ता ये ते विराट्चक्रगोचराः ।
अस्त्रान्तास्तु महेशानि[9] शिवताण्डवगोचराः ॥ ९७ ॥

त्रिपुराचक्र[10]मध्यस्था वह्निजायान्तिका मताः ।
एते मंत्राः त्वौत्सुक्येन[11] भुवि स्वप्नेन गोचराः ॥ ९८ ॥

स्वप्न[12]मार्गेण देवेशि उपदिष्टाः शिवेन तु ।
तेषां तु लक्षणं देवि शृणु यत्नेन साम्प्रतम् ॥ ९९ ॥

---

1. C तथा । 2. B स्वमन्त्रस्य । 3. B omits two lines. 4. B स्वा° । 5. B °पि सु° । 6. CN °त्यमे । 7. C स्मृतं । 8. B °त° । 9. N महादेवि । 10. B °क्रम° । 11. C स्वांशकेन । 12. B. °प्ने ।

पातालचक्रमंत्राणां लक्षणं शृणु साम्प्रतम् ।
अञ्जनं गुटिका गुप्तिश्चाज्ञासिद्धिस्तथैव च ॥ १०० ॥

शिवताण्डवचक्रस्य लक्षणं शृणु साम्प्रतम्[1] ।
[2]खड्गवेतालसिद्धिश्च परकायप्रवेशनम् ॥ १०१ ॥

चराचर[3]गतित्वं च ह्यणिमाद्यष्टकं तथा ।
त्रिपुराचक्रमंत्राणां लक्षणं शृणु पार्वति ॥ १०२ ॥

मनोरथस्य चाक्रेशस्त्रिपुराचक्रमण्डले[4] ।
षष्ठिसिद्धीश्वरो भूत्वा भुवि स्वर्गे च भूतले ॥ १०३ ॥

त्रि[5]श[6]ङ्करस्था ये[7] मन्त्रास्ते च कुत्र प्रतिष्ठिताः ।
अर्धनारीशचक्रे तु ते च तिष्ठन्ति पार्वति ॥ १०४ ॥

त्रिधा शङ्करतां याता[8]स्ते वै परशिवस्य च ।
मण्डले संस्थिता देवि सुन्दरीव तु[9] लक्षणम् ॥ १०५ ॥

पराप्रासादमंत्रो हि प्रासादपरया[10]ऽथवा ।
यथा द्वि[11]धात्व[12]मापन्नस्तत्रा[13]पि च महेश्वरि ॥ १०६ ॥

आद्यं यत्तु भवेद्देवि तदा[14]द्यशङ्करो मतः ।
स[15] शङ्करः परावत्स्यात्किमन्यच्छ्रोतुमिच्छसि ॥ १०७ ॥

**श्रीदेव्युवाच ।**

स्वप्नलब्धे महादेवि ऋषिच्छन्दादिकं कथम् ।
ऋषिच्छन्दादिकं यन्न स्वप्ने प्रोक्तं महेश्वर ॥ १०८ ॥

तथा पीठादिकं ध्यानं यन्न प्रोक्तं महेश्वर ।
यत्र नोक्तं महादेव तत्र किं च कथं भवेत् ॥ १०९ ॥

**श्रीशिव उवाच ।**

ऋषिः शिव इति प्रोक्तो गायत्रीच्छन्द ईरितम् ।
चिद्रूपा देवता देवि कीलका[16]द्य न विद्यते ॥ ११० ॥[17]

द्रविडाख्यं मतं प्रोक्तं काश्मीरं शृणु यत्नतः ।
ऋषिच्छन्दाद्यनुक्ते तु ऋषिर्ब्रह्मा महेश्वरि ॥ १११ ॥

गायत्रीच्छंद आदिष्टं को विजानाति[18] पार्वति ।
स्वराः शक्तय इत्युक्तास्त्वव्यक्तं कीलकं मतम् ॥ ११२ ॥

---

1 CN पार्वति। 2. C omits three lines. 3. B चर° । 4. B °ले । 5. BC द्विः । 6. C सं° । 7. C तत्° । 8. B °तायास्ता° । 9. N °वस्तु°; C °वर्तु° । 10. N °मा° । 11. B °वि° । 12. B °स्त्व° । 13. B °था° । 14. B °द्वा°; N °था° । 15. B इति, C ते । 16. C विकला° । 17. After this B repeats verses 68 to 77 of this Chapter. 18. बीजानि च ।

पीठं तु मातृकापीठं ध्यानादि मातृकोक्तवत् ।
गौडक्रमे महेशानि सिद्धमंत्रतया शिवे ॥ ११३ ॥
न ऋषिच्छंदसी देवि न पूजानियमः शिवे ।
जपमात्रेण सिद्धिः स्यान्नात्र कार्या विचारणा ॥ ११४ ॥
न चक्र[1]शोधनादीनि सिद्धमन्त्रे महेश्वरि ।
सिद्धमंत्रे विकल्पश्चेत्सिद्धत्वं तस्य गच्छति ॥ ११५ ॥
न ऋणं न धनं वापि जपमात्रेण सिद्धिदः[2] ।
पुरश्चर्यादिकं देवि पूर्ववत्परिकीर्तितम्[3] ॥ ११६ ॥
न षडङ्गं महेशानि चैतन्येशी तु देवता ।
प्राणप्रतिष्ठाध्यानं तु ध्यानमात्रं[4] प्रकीर्तितम् ॥ ११७ ॥
तेजःपुंजं मंत्रवर्णध्यानं सर्वार्थसिद्धिदम् ।
मूलमंत्र[5]षडावृत्या षडङ्गं न्यासमाचरेत ॥ ११८ ॥
पदं[6] यत्र भवेद्देवि[7] तेन वा न्यसनं[8] चरेत् ।
यत्र प्रोक्तं षडङ्गाद्यं तत्र वै[9] तत्समाचरेत् ॥ ११९ ॥
पीठेऽनु[10]क्ते शक्तिपीठं ध्यानेऽनु[11]क्ते तु मातृका ।
पुरश्चर्याद्यनुक्ते तु दिक्सहस्रं जपेत् प्रिये[12] ॥ १२० ॥
द्वाविंशाक्षरपर्यन्त दिक्सहस्रं प्रकीर्तितम् ।
तदुत्तरं महादेवि गजा[13]न्तकसहस्रकम् ॥ १२१ ॥
स्वप्न[14]लब्धे स्त्रिया दत्ते ह्यन्तरं तु कियद्भवेत् ।
संस्कारे साम्यता देवि घटसंस्कारमात्रके ॥ १२२ ॥
सिद्धारिचक्रं देवेशि नाममात्रं तु शोधयेत् ।
ऋणचक्रं विचिन्त्याथ रुद्रचक्राणि संन्यसेत्[15] ॥ १२३ ॥
ऋणधनाख्यचक्रं हि सर्वत्र कीर्तितं मया ।
ऋणचक्रं विहायाथ दशार्बुदमितं[16] जपेत् ॥ १२४ ॥
न तस्य सिद्धिर्देवेशि देवताशापमाप्नुयात् ।
स्वस्य नास्ति ऋणित्वं हि देवे दोषो हि दीयते ॥ १२५ ॥
दोषो न[17] दद्याद्दे[18]वेषु चोत्तमर्णं जपेत्सदा ।
ऋणिमत्रं समाश्रित्य यो मंत्रान्विविधान्जपेत् ॥ १२६ ॥
इह सिद्धीश्वरो भूत्वा परे शिवसमो भवेत् ।
मंत्रे संशोध्यमाने तु ऋणं हि दृश्यते[19] प्रिये ॥ १२७ ॥

**श्रीदेव्युवाच ।**

सिद्धिः स्वानुभवादेव तत्र किं वर्तते प्रभो ।

---

1. B °क्रे । 2. B °दा । 3. B °ता । 4. C मन्त्रं । 5. B °न्त्रं । 6. B °रं । 7. B °देवं । 8. B. नवान्यत्र सं° । 9. B चै° । 10. B. °मु° । 11. B °मु° । 12. B मतुं जपेत् । 13. C यज्जा° । 14. C सप्त° । 15. CN सन्त्यजेत् । 16. C °दं । 17. CN °धाम । 18. B °द्दै° । 19. C शस्यते ।

**श्रीशिव उवाच ।**

पूर्वं संसाधितो मंत्रः स ऋणीत्यभिधीयते ॥ १२८ ॥
तद्युगस्थाननाम्ना तु स ऋणी परिनिष्ठितः[1] ।
तत्प्रभावा[2]न्महेशानि[3] स मंत्रः सिद्धिदायकः[4] ॥ १२९ ॥
स्वप्नमध्ये तु संप्राप्त[5]श्चमत्कारो न विद्यते ।
शोध्यमाने महाचक्रे न ऋणी दृश्यते स्फुटम् ॥ १३० ॥
स मंत्रस्तु धनी देवि शिष्ये[6]भ्यश्चोपदेशयेत् ।

**श्रीदेव्युवाच ।**

पूर्वं प्रोक्तं त्वया देव स्वप्नलब्धादयः प्रभो ॥ १३१ ॥
स्वप्नलब्धा स्त्रिया दत्ता मालामंत्रादिकाः प्रिय ।
सिद्धमंत्रा इति प्रोक्तास्त्वन्यथा प्रतिपादितम् ॥ १३२ ॥
तत्र मे संशयो जातस्तन्मे वद महेश्वर ।

**श्रीशिव उवाच ।**

सत्यमेतन्महेशानि सिद्धत्वं वर्तते स्फुटम् ॥ १३३ ॥
यत्रास्ति प्रत्ययो देवि स सिद्धः परिकीर्तितः ।
प्रत्ययो नास्ति देवेशि स धनी परिकीर्तितः ॥ १३४ ॥
सिद्धत्वं प्रत्यये देवि न सर्वे सि[7]द्धतां गताः ।
पूर्वसंस्कारवशतस्त्वन्ये मन्त्राः प्रकीर्तिताः ॥ १३५ ॥
पारंपर्येण संप्राप्ताः संस्कारवशतः शिवे ।
तस्मादृण[8]धनं शोध्य मंत्रो जप्यः शुभेच्छुना[9] ॥ १३६ ॥
पूर्वनाम्ना ऋणित्वं हि तथैव विद्यमानता ।
ईदृशस्तु महेशानि महाभाग्येन लभ्यते ॥ १३७ ॥
संस्कारेण तु सम्प्राप्तस्त्व[10]धुना ऋणतां गतः ।
सोऽपि वै तादृशो देवि न धनी तादृशो मतः ॥ १३८ ॥
चक्रपंचकमध्ये[11] तु ह्येतच्छोज्यं महेश्वरि ।
इति संक्षेपतः प्रोक्तं साधनान्तं[12] प्रकीर्तितम् ॥ १३९ ॥
पुंस्त्रीनपुंसका दे[13]वि फट् स्वाहा हृत्[14] क्रमात्स्मृताः ।
इति संक्षेपतः प्रोक्तं साधनं कथ्यते शृणु ॥ १४० ॥
अस्त्रमध्ये त्वस्त्रमंत्राः वन्हिकान्तिकाः स्त्रियाम् ।
नमोऽन्ताः शिवमंत्रेषु ह्यन्तर्भूता इतीरिताः ॥ १४१ ॥

---

1. B °तिष्ठतः । 2. B °सादा° । 3. N °हादेवि । 4. C °वाचकः । 5. B °शप्त° । 6. C सिद्धे° । 7. C °द्धि° । 8. B °णं । 9. CN °च्छता । 10. B °प्ते त्व° । 11. B °ध्यं । 12. N न्ति, B न्तः । 13. B °हे° । 14. B °न्ताः° ।

केचिद्‌द्विमातृ[1]कोक्तं हि ध्यानमिच्छन्ति पार्वति ।
केचित्[2] नश्यन्तु काश्मीरा द्विधा भेदः प्रकीर्तितः ॥ १४२ ॥
पंचायतनयोगेन मन्त्रार्थेन महेश्वरि ।
पल्लवेनाथ देवेशि ह्यन्तर्भूता भवन्ति हि[3] ॥ १४३ ॥
भुवि स्थितास्तु ये मंत्राः पल्लवैः संगता यदि ।
ते हि स्वप्नेषु सम्प्राप्तास्तेषां कुत्र प्र[4]योजना[5] ॥ १४४ ॥
केचित्तु कवचे प्रोक्ताः केचित्स्तोत्रे प्रकीर्तिताः ।
[6]प्रधानवत्तु ते[7] सर्वे संजप्याः परमेश्वरि ॥ १४५ ॥
प्रधानोक्तं तु यत्कर्म तत्तत्सर्वत्र[8] कीर्तितम् ।
तत्रोदाहरणं देवि नीलसारस्वते स्मर ॥ १४६ ॥
गुरूपदिष्टा[9] देवेशि पुरश्चर्या प्रकीर्तिता ।
तत्र मार्गक्रमो[10] देवि कथितः पूर्ववत्प्रिये ॥ १४७ ॥
केरले तु पुरश्चर्या दशाङ्गा परिकीर्तिता ।
अष्टाङ्गा तु पुरश्चर्या काश्मीरे कथिता मया ॥ १४८ ॥
पंचाङ्गा तु पुरश्चर्या गौडमार्गे प्रकीर्तिता ।
स्वप्नलब्धे महेशानि अङ्गे[11] पुरस्क्रिया मता ॥ १४९ ॥
जपो होमो ब्राह्मणानां भोजनं त्रितयं मतम् ।
स्वप्नलब्धे पुरश्चर्या दोषद्वयनिवारणम् ॥ १५० ॥
जातसूतकमादौ स्यात्तदन्ते मृतसूतकम् ।
सूतकद्वयसंयुक्तः स मन्त्रो नैव सिध्यति ॥ १५१ ॥

**श्रीदेव्युवाच ।**

जातसूतकदोषस्य वारणं केन वा भवेत् ।
तन्मे वद महादेव

**श्रीशिव उवाच ।**

लिखेदष्टदलं शुभम् ॥ १५२ ॥
तन्मध्ये कलशं स्थाप्य तत्र वै वटपत्रकम् ।
वटपत्रे कुंकुमेन लिखित्वा मंत्रमेव तु ॥ १५३ ॥
कलशं पुरतः स्थाप्य गुरोः प्राणान्निवेशयेत् ।
गुरोः सकाशाद्‌ग्रहणं[12] जातसूतकवारणम् ॥ १५४ ॥

**श्रीदेव्युवाच ।**

मृतसूतकदोषो हि कीदृशः परमेश्वर[13] ।

**श्रीशिव उवाच ।**

विना पुरस्क्रियां देवि मंत्रो मृत इतीरितः ॥ १५५ ॥

---

1. B °त्र° । 2. E ते च । 3. CN वै । 4. B तु । 5. C °नम् । 6. C omits four lines. 7. B °ना वर्त्तते । 8. N त्सर्वं तत्र । 9. N °ष्टे । 10. B °मं । 11. B °ग । 12. B दृगुहणा । 13. B °रि ।

जीवहीनो यथा देहः[1] सर्वकर्मसु न क्षमः ।
पुरश्चरणहीनो हि तथा मन्त्रः प्रकीर्तितः ॥ १५६ ॥
तस्मात्कुर्यात्पुरश्चर्यां मृतदोषप्रशान्तये ।
यो मन्त्रश्चेतनायुक्तः स मन्त्रः सिद्धिदायकः ॥ १५७ ॥
चैतन्यं तु पुरश्चर्या चैतन्यं गुरुरेव च ।
यंत्रचैतन्यकं देवि मंत्रचैतन्यकं तथा ॥ १५८ ॥
गुरुचैतन्यकं चैव[2] चैतन्यत्रितयं मतम् ।
चैतन्यत्रयहीनो यः[3] स मंत्रः सिद्धिदो न हि ॥ १५९ ॥
स्वप्नलब्धो[4] धनी चेत्स्यात्तदा किं वा विधीयताम् ।
मन्त्रानुसारतो[5] देवि पुरश्चर्यां समाचरेत् ॥ १६० ॥
तत्तच्चक्रा[6]नुसारेण होमकर्म[7] समाचरेत् ।
अनुक्तहोमद्रव्ये तु तिलैर्होमः प्रकीर्तितः ॥ १६१ ॥
घृतेन कथितो देवि यवेनापि तथैव हि ।
केवलं घृतहोमेन वरदाः सर्वशक्तयः ॥ १६२ ॥
एवं पुरस्क्रियां कृत्वा सिद्धत्वं प्रविचार्य च ।
मण्डलांतं परीक्ष्याऽथ ह्यथवा त्व[8]यनान्तकम् ॥ १६३ ॥
वत्सरान्तं चावलोक्य सहस्रं प्रत्यहं[9] जपेत् ।
चमत्कारो न जायेत[10] तदा शिष्यो[11] वदेद्गुरुम्[12] ॥ १६४ ॥
ऋणादिकं विचार्याऽथ शिष्याय प्रव[13]देच्छिवे ।
अन्यथा विकलो भूयाच्छिष्यपापं गुरौ भ[14]वेत् ॥ १६५ ॥
त्यागं न कुर्याद्देवेशि मन्त्रत्यागे दरिद्रता ।
इति संक्षेपतः प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ॥ १६६ ॥

**श्रीदेव्युवाच ।**

भूलोकस्थो महामन्त्रः स्वप्नमध्ये समागतः ।
तत्र किं वा प्रकर्त्तव्यं किं तत्र मण्डलं भवेत् ॥ १६७ ॥[15]

**श्रीशिव उवाच ।**

पूर्वं[16] संसाधितो मन्त्रो दत्तः केनाप्यसाधितः ।
स ऋणी वा धनी वाऽपि[17] विचार्य साधयेत्प्रिये ॥ १६८ ॥
तत्तत्कल्पोक्तरीत्या तु पुरश्चरणमाचरेत् ।
पारम्पर्यविहीनत्वा[18]त्पूर्वसंसाधनात्प्रिये ॥ १६९ ॥
स्वप्नद्वारा तु सम्प्राप्तस्तं मन्त्रं साधयेत्प्रिये ।
अरिमन्त्रः स्वप्नमध्ये प्राप्तश्चेत्किं विधीयताम् ॥ १७० ॥

---

1. B ही; C °वि । 2. B देवि । 3. B हि । 4. C °ब्धे । 5. C °णे । 6. B तत्र वक्रा° । 7. B °ल्पं । 8. B हा°; C चान्तपात° । 9. B °यं । 10. B क्रियते । 11. CN °ष्ये । 12. CN °रु. । 13. CN °द° । 14. B °रोर्भ° । 15. Verse 167 in B follows 168. 16. B सर्व° । 17. C यस्य । 18. C °नं वा ।

पल्लवं योजये[1]द्वापि त्याज्यो वा यत्नतः शिवे।
पल्लवैः संयुतो यो हि मन्त्रान्तरमुपागतः ॥ १७१ ॥

मूलप्रकृतिवद्देवि सर्वं प्रोक्तं मया तव।
अस्त्रप्रकरणा[2]द्देवि ह्यस्त्रमध्ये प्रयोजना ॥ १७२ ॥

मंत्रप्रकरणाद्दे[3]वि मन्त्रमध्ये नियोजयेत्।
मूलप्रस्तारमार्गेण दर्शनादिक्रमेण तु ॥ १७३ ॥

षडाम्नायक्रमेणैव प्रस्तारद्वारतः शिवे।
मंत्रमात्रे तथा विद्यामात्रे प्रस्तारसाधना ॥ १७४ ॥

पूर्वमेव मया प्रोक्ता संख्यां श्रृणु महेश्वरि[4]।
मन्त्र[5]विद्यादिभेदैस्तु आम्नायदर्शनादिकैः ॥ १७५ ॥

पारे परार्धसंख्याता मंत्रा जाता[6] महेश्वरि।
कलौ प्रस्तारहीनत्वादङ्का एव प्रकीर्तिताः ॥ १७६ ॥

प्रस्ताररूपं यज्ज्ञानं गुह्याद्गुह्यतरं शिवे[7]।
आदिनाथो विजानाति नाहं जानामि पार्वति ॥ १७७ ॥

श्रीमहासुन्दरी विद्या काली कामकला तु सा।
आदिनाथ[8]परशिवौ[9] बीजाङ्कुरसमानकौ ॥ १७८ ॥

तथा कामकला काली श्रीमहासुन्दरी प्रिये।
सर्वं संक्षेपतः प्रोक्तं रहस्यं श्रृणु पार्वति ॥ १७९ ॥

स्त्रीलब्धे[10] देवदेवेशि श्रीमद्देवीपरंपरा।
स्वप्नलब्धे महादेवि दक्ष[11]मूर्तिपरंपरा ॥ १८० ॥

पूजयेद्दक्षिणामूर्तिं गुरुत्वेन महेश्वरि।
चतुष्कं पूजयेदादौ किमन्यच्छ्रोतुमिच्छसि ॥ १८१ ॥

षडाम्नायस्य मंत्राणां प्रस्तारगणना शिवे।
षडा[12]म्नायस्य प्रस्तारास्त्रिंशद्वृन्दनिखर्वकाः[13] ॥ १८२ ॥

[14]पंचार्बुदेति मंत्राः स्युः पूर्वाम्नाये महेश्वरि।
दक्षाम्नाये महेशानि नवत्यर्बुदकोटिकम् ॥ १८३ ॥

पंचखर्वेण संयुक्ता मंत्राः प्रोक्ता महेश्वरि।
आम्नाये पश्चिमे देवि[15] त्रिंशदर्बुदपद्मकाः ॥ १८४ ॥

मंत्राः प्रोक्ता महेशानि चोत्तरं[16] श्रृणु सादरम्।
पचाशद्वै महापद्म षडर्बुदत्रिवृंदकम् ॥ १८५ ॥

1. B °पे°। 2. N °णतो; C °णे। 3. N °णतो दे° । 4. N वरानने। 5. B °न्त्रे।
6. B नाना। 7. C प्रिये। 8. B °थः। 9. B °वः। 10. N °ब्धं; C मध्ये। 11. B °त्त°।
12. CN पूर्वा°। 13 CN °कं। 14. C omits two lines. 15. CN °माख्ये तु।
16 B °रे।

ऊर्ध्वाम्नाये महादेवि प्रस्तारगणनां शृणु ।
अष्टार्बुदं कोटिवृन्दं पंचशङ्खेति कीर्तिताः ॥ १८६ ॥

पातालाम्नायगणनां शृणु यत्नेन साम्प्रतम् ।
कोट्यर्बुदं त्रिनवति[1] वृंदं पद्मेन संयुताः ॥ १८७ ॥

मंत्राः पातालप्रस्तारमध्यस्थाः परमेश्वरि ।
षडाम्नायस्य प्रस्ताराः प्रोक्ता यत्नेन शाङ्करि ॥ १८८ ॥

न प्रकाश्या यत्र कुत्र गणनामात्रगोचराः ।
गणितं यो हि जानाति शिवसिद्धान्तगं शिवे ॥ १८९ ॥

अष्टाविंशतिसिद्धान्ते यस्य ज्ञानं भवेत्प्रिये ।
श्रीसिद्धान्तमते देवि प्रस्तारज्ञानमेव हि ॥ १९० ॥

[2]प्रस्तारज्ञो महेशानि कलौ दुर्लभ एव हि ।
गणना कथिता देवि प्रकारः कथ्यते शृणु ॥ १९१ ॥

एतत्प्रस्तारविज्ञानी शिवरूपो न संशयः ।
प्रस्तारज्ञस्य मुखतो यद्यन्निर्याति तत्प्रिये[3] ॥ १९२ ॥

शिववाक्यसमं तत्तत्[4] किमुत[5] फलकत्थनम् ।
इति संक्षेपतः प्रोक्तं प्रस्तारः कथ्यते परः ॥ १९३ ॥

**श्रीदेव्युवाच ।**

संसूचितं तु[6] यत्पूर्वं[7] कथ्यतामपि साम्प्रतम् ।
मन्त्रे वृत्तं महादेव कथं ध्यायेद्धि तद्वद ॥ १९४ ॥

होमतर्पणकार्या[8]णि कथं कार्याणि तद्वद ।

**श्रीशिव उवाच ।**

दल[9]मूलं तु यद्वृत्तं तदाधारस्थमीरितम् ॥ १९५ ॥

दलोपरिस्थं वृत्तं हि शृणु त्वं प्राणवल्लभे ।
चन्द्रसूर्याग्निभमयं व्यत्ययेन प्रकीर्तितम् ॥ १९६ ॥

एते प्रसिद्धा देवेशि न हि चन्द्राः प्रकीर्तिताः[10] ।
देव्याः कोट्यर्बुदकला सदोदेति हि यत्र वै ॥ १९७ ॥

स चन्द्रः स च सूर्यश्च सोग्निर्मुख्य इतीरितः[11] ।
षडन्वये महेशानि ते च प्रोक्ता मया तव ॥ १९८ ॥

त्रिरूपं वृत्तत्रितयं तेजोरूपं महेश्वरि ।
विराट्स्वरू[12]पं य[13]त्प्रोक्तं तदेव परिनिष्ठितम् ॥ १९९ ॥

---

1. C °यनं । 2. C omits this line. 3. CN यद्यन्निःसरति प्रिये । 4. B तत्र । 5. B किंतु हृत्° । 6. C च । 7. N °र्वं । 8. CN कर्मा° । 9. C °त्त° । 10. CN समीरिताः । 11. B ताः । 12. CN °ट्रू° । 13. C च य°; B त° ।

अन्यत्र स्म[1]रणीयं हि स[2]वृत्तिध्या[3]नकर्मणि ।
तेजःपुंजनिभा[4] देवि परिखा[5] संस्मरेत्सदा ॥ २०० ॥

उत्तरोत्तरतो देवि सगुणध्यानकर्मणि ।
उत्तरोत्तरतोच्चत्वे चिन्त्यमाने महेश्वरि ॥ २०१ ॥

साम्मुख्यं चैव सर्वेषां वर्तते प्रियवादिनि ।
यथोच्चनीचस्थानेषु सर्वा आ[6]वृत्तयो मताः ॥ २०२ ॥

इति कारणतो मुख्यो मेरुप्रस्तार ईरितः ।
कैलासाख्यस्तथा देवि प्रस्तारः परिकीर्तितः ॥ २०३ ॥

रत्नगर्भाख्यप्रस्तारस्तृतीयः परिकीर्तितः ।
आद्यप्रस्तारे देवेशि सर्वेषां दर्शनं समम्[7] ॥ २०४ ॥

कैलासाख्ये महेशानि केषांचिदंतरायिताः ।
रत्नगर्भाख्यप्रस्तारे मुख्या मताः[8] प्रकीर्तिताः ॥ २०५ ॥

आवृत्तयस्तु देवेशि त्रिधा भेदत्वमागताः ।
नोचेत्त्रिधात्वं किमर्थं विश्वरूपत्वमेव तु ॥ २०६ ॥

सर्वत्र[9] कीर्तितं पूर्वं सत्यमेव महेश्वरि ।
अधिकारवशाद्देवि तत्त[10]त्स्थानसमाश्रयः ॥ २०७ ॥

होमकर्म शृणु प्राज्ञे पूर्वप्रश्नोत्तरं तव ।
होमे स्वाहां प्रयुञ्जीत ह्रन्मन्त्रस्तर्पणे मतः ॥ २०८ ॥

तथाभिषेके देवेशि ह्रन्मन्त्रः परिकीर्तितः ।
होमेऽग्निजाया[11] या प्रोक्ता सा होमे परिनिष्ठिता[12] ॥ २०९ ॥

मंत्रमध्ये यदा वन्हिजाया द्वे वर्तते प्रभो ।
मंत्राते चैव ह्[13]न्मंत्रास्तथा वन्हि[14]प्रिया विभो ॥ २१० ॥

मंत्रेणैव तु निर्वाहो द्वितीया किं प्रयोज्यताम् ।
मंत्रांते या वन्हिजाया सा तु मंत्रस्वरूपिणी ॥ २११ ॥

होमाङ्गत्वे द्वितीया तु कीर्तिता वै मया तव ।
तथैव तर्पणे विद्धि ह्रन्मंत्रस्तु द्वितीयकः ॥ २१२ ॥

एवं न कुरुते यस्तु स हीनायुर्भवेच्छिवे ।
होमकर्म तु कार्यं स्यान्मंत्रे सिद्धे फलं भवेत्[15] ॥ २१३ ॥

सैवाग्निजाया चेद्धोमे गृह्यते प्राणवल्लभे ।
स्वस्य प्रभुत्वमायाति मंत्राः क्लिन्ना भवेत्प्रिये ॥ २१४ ॥

---

1. C श° । 2. B सा° । 3. B °ध्यी° । 4. B °भो । 5. C °रषां । 6. C °द्या°; N °सा° । 7. B मम । 8. CN याताः । 9. B सर्व । 10. C °त्र । 11. C °मोमनाया । 12. B °कीर्तिना° । 13. B तृ° । 14. B मन्त्र° । 15. B लभेत्° ।

क्लिन्नदोषनिवृत्यर्थं होमे स्वाहा मयेरिता ।
स्वानन्दोप[1]निवृत्यर्थं हृन्मन्त्रस्तर्पणे मतः ॥ २१५ ॥
मन्त्रक्षोभे[2] महेशानि हुंफडादि तु वर्तते ।
तथापि पल्लवत्वेन पुनर्देयं महेश्वरि ॥ २१६ ॥
हृन्मंत्रेण पुटीकारे क्रियमाणे महेश्वरि ।
मंत्रक्षोभनिवृत्तिस्तु सर्वथा[3] जायते शिवे ॥ २१७ ॥
मंत्रमध्ये नतिर्देवि वर्तते यद्यपि प्रिये ।
तथापि संपुटत्वेन पुनर्देया महेश्वरि ॥ २१८ ॥
हृदयादि षडस्त्राणा पुरश्चर्योच्यते शृणु ।
इति संक्षेपतः प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ॥ २१९ ॥

**श्रीदेव्युवाच ।**

देवेश श्रोतुमिच्छामि रहस्यं भावनाक्रमे[4] ।

**श्रीशिव उवाच ।**

स्वाहान्तः सर्वकार्यार्थे फडंतः क्रूरकर्मणि ॥ २२० ॥
नमोऽन्तो मारणादौ तु मंत्रजातेः फलं स्मृतम् ।
शक्तौ स्त्रीषु च मंत्रेषु रुद्राक्षं वर्जयेच्छिवे ॥ २२१ ॥
अथ वक्ष्यामि देवेशि चतुर्णामैक्यभावनाम् ।
गुरुदैवतमंत्राणां स्वाभिन्नत्वेन भावना ॥ २२२ ॥
गुरुतेजःस्वरूपं हि कूटमेकं विभावयेत् ।
देवचैतन्यकूटं हि तेजोरूपं विभावयेत् ॥ २२३ ॥
मन्त्राक्षराणां चैतन्यं ज्वलत्पर्वत[5]सन्निभम् ।
स्वात्म[6]चैतन्यकूटं हि तथैव मेरुतुल्यकम् ॥ २२४ ॥
एकीभू[7]तं चतुस्तेजो ब्रह्माण्डव्यापकं शिवे ।
कोटिकालानलप्रख्यं यमसूर्यसमप्रभम् ॥ २२५ ॥
चन्द्रार्बुदसमं देवि विराड्रूपं विभावयेत् ।
तेजःपुंजं विभाव्याथ तत्र मूर्तिं प्रकल्पयेत् ॥ २२६ ॥
तत्रेष्टदेवतां रम्यां कोटिकन्दर्पसन्निभाम् ।
ध्यानोक्तां तां तु सन्ध्यात्वा जपं कुर्यात् समाहितः[8] ॥ २२७ ॥
अथवा सकलं ध्यायेत्तेजःपुंजनिभं शिवे[9] ।
एकीभूतं च तत्तेजः सदा ध्यायेन्महेश्वरि ॥ २२८ ॥
अथांतर्मातृकां[10] वक्ष्ये पारंपर्यक्रमागताम् ।
षड्दलानां स्वरूपं तु[11] पूर्वमेव प्रकीर्तितम् ॥ २२९ ॥

---

1. B स्वान्तदोष° । 2. B यवल्लो°(?) । 3. C °दा । 4. क्रमं । 5. B °वत्तेज° ।
6. B स्वान्त° । 7. C °कृ° । 8. B °नसात् । 9. N °वाम् । 10. B °को । 11. B तत्° ।

वर्णोच्चारा[1]दिकं सर्वं[2] प्रोक्तं तुभ्यं मया शिवे ।
न्यसनस्य क्रमं देवि विलाससम्प्रदायके[3] ॥ २३० ॥
कथ्यते शृणु देवेशि रहस्यातिरहस्यकम् ।
ब्रह्माण्डात्कीटपर्यन्तं शिवशक्तिमयं ध्रुवम् ॥ २३१ ॥
शिवशक्तिमये मार्गे पराप्रासादगोचरे ।
श्रीप्रासादपरापि स्याद्बिंदुसर्गान्वितापि सा[4] ॥ २३२ ॥
हसंशक्तिमनुयुतं[5] बिन्दुनादान्वितं शिवे ।
श्रीप्रासादपरामन्त्रः कीर्तितः परमेश्वरि ॥ २३३ ॥
हाद्यमादौ समुद्धृत्य मध्ये[6]र्णं बिन्दुसंयुतम् ।
साद्यमंते समुच्चार्य न्यसनीयं क्रमेण तु ॥ २३४ ॥
प्रत्यर्णं विन्यसेद्देवि योगं बाह्य[7]मुपाचरेत् ।
साद्यं हाद्यं साद्यहाद्ये वर्णादौ तु समुच्चरेत् ॥ २३५ ॥
ततो वर्णं समुच्चार्य न्यसनीयं महेश्वरि ।
हाद्येन केवलेनैव संपुटीकृत्य मंत्रवित् ॥ २३६ ॥
साद्येन केवलेनैव सम्पुटीकृत्य मंत्रवित् ।
साद्ययोगं ततो[8] वर्णं न्यसेद्देवि यथाक्रमात् ॥ २३७ ॥
हाद्ययोगं[9] ततो वर्णं[10] न्यसेद्देवि यथाक्रमात् ।
श्रीबीजं तु समुद्धृत्य श्रीप्रासादपरा[11] ततः ॥ २३८ ॥
पुनः श्रीबीजमुद्धृत्य ततोर्णं तु समुच्चरेत् ।
अनेन सम्पुटीकृत्य न्यसेत्तत्तत्स्थले शिवे ॥ २३९ ॥
श्रीँ स्रा[12] ततः श्रीँ वै[13] वर्णं ततः श्रीँ तु समुद्धरेत् ।
पुनः श्रीबीजमुद्धृत्य हसौँ श्रीँ तु समुच्च[14]रेत् ॥ २४० ॥
एवं संपुटयोगेन न्यसनीयं महेश्वरि ।
श्रीबीजपुटितं हाद्यं ततो वर्णं समुच्चरेत् ॥ २४१ ॥
आदौ बीजं ततो वर्णं न्यसेत्तत्तत्स्थले प्रिये ।
श्रीबीजं तु ततः साद्यं पुनः श्रीबीजमु[15]च्चरेत् ॥ २४२ ॥
अनेन संपुटीकृत्य न्यसेद्यत्नेन शाम्भवि ।
श्रीबीजपुटितं साद्यं ततो वर्णं समुच्चरेत् ॥ २४३ ॥
अनेन क्रमयोगेन सुन्दरी सुप्रसीदति ।
साद्यं श्रीबीजपुटितं ततो वर्णं महेश्वरि ॥ २४४ ॥
हाद्यं श्रीबीजपुटितं वर्णान्ते तु समुच्चरेत् ।
एवं विन्यस्य यत्नेन साक्षात्सिद्धीश्वरो भवेत् ॥ २४५ ॥

1. B °द्धारा° । 2. B° र्वे । 3 B °कं । 4. CN वा । 5. B °प्रोक्त । 6. B °ध्य° । 7. BC वा स° । 8. N यथा । 9. B °वर्णगतं । 10. B omits. 11. B °रो । 12. B तिस्रो । 13. B श्रीत्व° । 14. N °द्ध° । 15. B °ज चो° ।

श्रीबीजपुटितं हाद्यं साद्यं श्रीपुटितं तथा[1] ।
ततो वर्णं महेशानि पूर्वबीजानि चोच्चरेत् ॥ २४६ ॥
एवं हि सम्पुटीकृत्य स[2]योगं समुपा[3]चरेत् ।
साद्यं श्रीबीजपुटित हाद्यं श्रीपुटितं ततः ॥ २४७ ॥
ततो वर्णं पुनर्बीजं न्यसेत्साधकसत्तमः ।
योगं कृत्वाऽथवा देवि न्यसनीयं महेश्वरि ॥ २४८ ॥
श्रीबीजपुटितं हाद्यं साद्यं च तत्पुटीकृतम् ।
वर्णं तत्पुटितं कृत्वा योगं च समुपाचरेत् ॥ २४९ ॥
साद्यं श्रीबीजपुटितं हाद्यं च[4] तत्पुटीकृतम् ।
एतैस्तु पुटितं वर्णं योगं[5] च समुपाचरेत् ॥ २५० ॥
हाद्यं श्रीपुटितं देवि साद्यं श्रीपुटितं तथा ।
पुनर्हाद्य श्रीपुटितं ततो वर्णं समुच्चरेत् ॥ २५१ ॥
एतैस्तु[6] सम्पुटीकृत्य पुनर्यो[7]गं समाचरेत् ।
साद्यं श्रीपुटितं देवि हाद्यं श्रीपुटितं तथा ॥ २५२ ॥
पुनः साद्यं श्रीपुटितं ततो वर्णं तु पूर्ववत् ।
[8]हाद्यं श्रीपुटितं देवि साद्यं श्रीयोगयुक्तकम् ॥ २५३ ॥
पुनर्हाद्यं श्रीपुटितं वर्णं तैस्तु[9] पुटीकृतम् ।
आदौ योगं च वा कृत्वा ततः साद्यं तु हाद्यवत् ॥ २५४ ॥
हाद्यं श्रीपुटितं देवि साद्यं श्रीपुटितं तथा ।
पुनर्हाद्य श्रीपुटितं हसौ[10]न्तैस्तु पुटीकृतम् ॥ २५५ ॥
योगं कृत्वाथवा[11] देवि हसौं श्रीपुटितं च वा ।
एतैस्तु पुटितं वर्णं[12] हसौं श्रीपुटितं च वा ॥ २५६ ॥
श्रीहसौमितिमध्ये वा हसौं श्रीमिति वा शिवे ।
हाद्यं श्रीपुटितं देवि साद्यं श्रीपुटितं तथा ॥ २५७ ॥
पुनर्हाद्यं श्रीपुटितं हसौन्तैस्तु पुटीकृतम् ।
योगं कृत्वाथवा देवि स्हौं[13] श्रीपुटितं च वा ॥ २५८ ॥
एतैस्तु पुटितं वर्णं योगं वा पूर्ववच्छिवे ।
[14]साद्यं श्रीपुटितं देवि हाद्यं श्रीपुटितं तथा[15] ॥ २५९ ॥
पुनः साद्य श्रीपुटितं स्हौन्तैस्तु पुटीकृतम् ।
एतैस्तु पुटितं वर्णं स्हौं श्रीपुटितं च वा ॥ २६० ॥

---

1. CN ततः । 2. CN त° । 3. B °मुच्च° । 4. B वै । 5. B adds तत्पुटितं । 6. C °स्तत्° । 7. B स्तथ यो° । 8. The Dacca MS begins here. D does not give the earlier portion which is replaced by a part of the second Khanda. 9. B तु तत्° । 10. D हेस; B ततो; C स्हुं । 11. D तथा । 12. B adds योगं । 13. D तत्रा । 14. D omits two lines. 15. CN च वा ।

श्रीँ स्हौमिति वा मध्ये स्हौं श्रीमिति वा प्रिये ।
बिन्दुसर्गान्वितं कृत्वा न्यसनीयं महेश्वरि ॥ २६१ ॥

हाद्यं साद्यं महेशानि श्रीयुतं पुटितं[1] च वा ।
पूर्वोक्तैः पुटितं[2] ह्येतत्[3] युक्तं वा परमेश्वरि ॥ २६२ ॥

उत्तरोत्तरयोगेन पुटितं संयुतं च वा ।
हाद्यसाद्यक्रमेणैव पारायणक्रमं विदुः ॥ २६३ ॥

पारायणक्रमाः सर्वाः प्रोक्ताः पूर्वं मया शिवे ।
अयं क्रमो महेशानि देवानामपि दुर्लभः ॥ २६४ ॥

नाख्येयो यत्र कुत्रापि त्वन्यथा शापमाप्नुयात् ।
अनन्तपादुकाख्यो[4]ऽयं क्रमः प्रोक्तो मया शिवे ॥ २६५ ॥

अन्यपारायणैर्देवि सूक्ष्मकालेन जायते ।
एवं षट्चक्रभेदे[5]षु पारायणमुदीरितम् ॥ २६६ ॥

मेधादीक्षा यस्य भवेत्तस्यात्रैवाधिकारिता ।
मेधादीक्षा विना देवि चक्रपारायणं चरेत्[6] ॥ २६७ ॥

स च मृत्युमवाप्नोति रौरवं नरकं व्रजेत् ।
परकाय[7]प्रवेशादि यस्य हस्ते विराजते ॥ २६८ ॥

तस्य मेधादीक्षणं हि गदितं तु मया शिवे ।
मया पूर्वं[8] महेशानि षड्[9]वारं तु कृतं च वै ॥ २६९ ॥

अहं किञ्चित्तु[10] जानामि तवाग्रे तु प्रकाशितम् ।
पूर्णं[11] जानाति देवेशि सुन्दरी परदेवता ॥ २७० ॥

नान्यो जानाति देवेशि संक्षेपाद्गदितं मया ।
पूर्णाभिषेकयुक्तो हि नामपारायणं तथा ॥ २७१ ॥

मंत्रपारायणं देवि नाडीपारायणादिकम् ।
मेधादीक्षासमायुक्तश्चक्रपारायणं चरेत् ॥ २७२ ॥

अल्पायुष्यादधर्मत्वात्पारुष्यजल्प[12]नात् शिवे ।
कलौ देवेशि नान्येषामधिकारो मयेरितः ॥ २७३ ॥

बा[13]लाधिकारी यो[14] देवि तस्य विद्याधिकारिता ।
विद्याधिकारे सम्पन्ने[15] षोडश्यामधिकारवान् ॥ २७४ ॥

षोढाविद्यादि[16]सम्पन्नः पराविद्याधिकारवान् ।
पराधिकारसंयुक्तः पराप्रासादवान् भवेत् ॥ २७५ ॥

---

1. B omits. 2. B °ते । 3. B °त । 4. B अन्यं तथा दुरन्यो° । 5. N °यागे° । 6. D भवेत् । 7. B °या° । 8. D °वैः । 9. B पट° । 10. B °च्च । 11. B °र्णो । 12. B °ध्याज्जन° । 13. DN मा° । 14. C °रिणो । 15. D °न्नो । 16. D °धि° ।

श्रीप्रासादपरायुक्तो निर्वाणाधिपतिर्भवेत् ।
निर्वाणदीक्षासंयुक्तः षडन्वयविधौ शिवे[1] ॥ २७६ ॥
अधिकारी भवेत् सो हि तत्त्वं शृणु महेश्वरि ।
षडन्वयसमायुक्तो मेधादीक्षाधिकारवान् ॥ २७७ ॥
षडन्वयान्तगं कृत्वा मेधादीक्षणमाचरेत् ।
मेधादीक्षणयुक्तश्चेत् चक्र[2]पारायणं चरेत् ॥ २७८ ॥
चक्रपारायणे संख्या सुन्दरीचरणान्तकी[3] ।
[4]बहिः[5]पारायणे संख्या गदिता तृतयेऽपि च ॥ २७९ ॥
तथैव कालिकायास्तु प्रोक्ता श्रीचरणान्तकी ।
यदैव दर्शनं जातं तदैव तु समापनम् ॥ २८० ॥
बहिरन्तरयोर्भेदस्त्वेतावद्वर्तते शिवे ।
प्रस्तारषोडशान्तं[6] हि कलौ पारायणं चरेत् ॥ २८१ ॥
अत्र पारायणं नाम न्यसनं[7] परमेश्वरि ।
हठात्तैरपशुर्यस्तु[8] करोति परमेश्वरि ॥ २८२ ॥
तस्य नाशो भवेद्देवि देवताशापमाप्नुयात् ।
मेधादीक्षासमायुक्तः षोडशोत्तरगं चरेत् ॥ २८३ ॥
प्रस्तारक्रमयोगेन ज्ञातव्यं परमेश्वरि ।
बालादीक्षासमायुक्तश्चन्द्रप्रस्तारयुक् न्य[9]सेत् ॥ २८४ ॥
विद्यादीक्षासमायुक्तः साधना[10]द्यन्तगं न्यसेत् ।
सम्प्रदायक्रमेणैव विन्यसेत्साधकोत्तमः ॥ २८५ ॥
पूर्णाभिषेकयुक्तो हि बह्निप्रस्तारसम्पुटान्[11] ।
प[12]रादीक्षणयुक्तो हि भूतप्रस्तारसम्पुटान् ॥ २८६ ॥
[13]श्रीप्रासादपरा[14]युक्तो मुनिप्रस्तारसम्पुटान् ।
निर्वाणदीक्षासंयुक्तो नन्दप्रस्तारसम्पुटान् ॥ २८७ ॥
षडन्वयसमायुक्तः कलाप्रस्तारसम्पुटान् ।
योगं[15] त्वथ प्रकुर्वीत ह्यादावन्तेऽपि पार्वति ॥ २८८ ॥
मध्ये[16] वर्णं तु कृत्वा च वर्णसम्पुटितं न्यसेत् ।
पूर्णाभिषेकयुक्तो हि षडन्वयसमः शिवे ॥ २८९ ॥
षडन्वयानां यत्कर्म तदेतस्यापि कीर्तितम्[17] ।
षडन्वयोत्तरं[18] देवि मेधादीक्षां समाचरेत् ॥ २९० ॥

1. B विधिः । 2 C तच्च; D °त्क्रम° । 3. B °का । D omits five lines from here. 4. B omits two lines. 5. C यदि । 6. B °न्ते । 7. B °णानामानन्त्यं । 8. C हसन्तैर्वरयुक्तास्तु; D हठात्तैरर्पितार्थस्तु° । 9. C °प्रण्य° । 10. BCN साद्यता° । 11. B inserts verse 288 after this. 12. C पु° । 13. C omits two lines. 14. N °समा° । 15. C °गान् । 16. D °ध्य° । 17. C °ताः । 18. B °रे ।

[1]मेधादीक्षणसं[2]युक्तः प्रस्तारषोडशोत्तरम् ।
न्या[3]सयोगेन देवेशि चक्रपारायणं चरेत् ॥ २९१ ॥
आकर्षणं त्रिलोकानां[4] वश्याज्ञासिद्धिरेव च ।
परकायप्रवेशश्च गुटिकासिद्धिरेव च ॥ २९२ ॥
वायुस्तम्भस्तु वेतालसिद्धिस्तद्धस्तगोचराः ।
इति संक्षेपतः प्रोक्तं किमन्यच्छ्रोतुमिच्छसि[5] ॥ २९३ ॥

**श्रीदेव्युवाच ।**

देव देव महादेव संसारस्थितिकारक ।
पूर्वं संसूचितं यन्मे तन्मे कथय शंकर ॥ २९४ ॥
किमेतावन्महादेव ममापि[6] गोपितं च यत् ।

**श्रीशिव उवाच ।**

महादेवि पराराध्ये सर्वकारणविग्रहे ॥ २९५ ॥
प्राणायाम[7]रहस्यं हि कथ्यते शृणु साम्प्रतम् ।
प्राणायामः पञ्चधा स्यात्तत्क्रमं शृणु यत्नतः ॥ २९६ ॥
कलाभिः पूरकं कुर्यान्महतीभिश्च कुम्भकम्[8] ।
रेचकं च तदर्धाभिः पुनरेतत्त्रयं चरेत् ॥ २९७ ॥
त्रिवारं त्रितय कुर्यात्प्राणायामः प्रकीर्त्तितः ।
क्रमोत्क्रमेण देवेशि द्वितीयः परिकीर्त्तितः ॥ २९८ ॥
कुम्भकान्तो महेशानि यतीनां वामचारिणाम् ।
रेचकं वा पूरकं वा कृत्वा द्विविध ईरितः ॥ २९९ ॥
अवा[9]न्तराख्यभेदो हि कथितस्ते मया तव ।
तृतीयस्तु महेशानि कथ्यते शृणु साम्प्रतम् ॥ ३०० ॥
कलावृद्धि[10] तदर्धं च कृत्वादौ परमेश्वरि ।
अन्यदादि समारभ्य क्रमेणानेन कारयेत् ॥ ३०१ ॥
पूर्ववत्तु[11] तृतीयं स्यादेवं वारत्रयं चरेत् ।
कुम्भकाद्यं तद्द्वयान्ते प्राणायामद्वयं भवेत् ॥ ३०२ ॥
पूर्वोक्तक्रमयोगेन तदन्यः परिकीर्त्तितः ।
द्वितीयाख्यक्रमेणैव द्वितीयः परिकीर्त्तितः ॥ ३०३ ॥
[12]तृतीयाख्यक्रमेणैव तृतीयः परिनिश्चितः ।
मालाशृङ्खलिकायोगात् तृतीयः परिकीर्त्तितः ॥ ३०४ ॥

1. D omits five lines. 2. N °तुसं° । 3. C मा° । 4. B °कालीनं । 5. D closes the second Patala here. 6 D मया तु । 7. CDN रहस्याति° । 8. B प्राणायामः प्रकीर्त्तितः । This is followed by क्रमोत्क्रमेण......in the fourth line. 9. C अन° । 10. B कलां वृद्धां । 11. N °कं तु । 12. D omits six lines.

मालाशृङ्खलिकायोग[1]निरुक्तिं शृणु सादरम् ।
आद्यादन्तं[2] चरेद्देवि ह्यन्तादा[3]द्यं समाचरेत् ॥ ३०५ ॥

पुनराद्यं तथान्तं च प्राणायामः कलापतिः ।
अत्र पूर्वत्रयं कृत्वा प्रस्तारः परिकीर्त्तितः ॥ ३०६ ॥

[4]पुनरन्तं तथाद्यं च यावत् तृतयकं भवेत् ।
कलाशृङ्खलिकाख्यस्तु प्राणायामः प्रकीर्त्तितः ॥ ३०७ ॥

कलावसुर्वेद[5]संख्यप्राणायामस्तथापरः ।
महामन्त्रविधौ देवि कीर्त्तितस्ते मया तव ॥ ३०८ ॥

अष्टौ वेदद्वितयकं ततोऽधिक्ये प्रकीर्त्तिताः ।
ततोऽधिक्ये महेशानि वेदनेत्रशशिक्रमात् ॥ ३०९ ॥

प्रस्ताराः कथिता देवि श्रृणु वर्ण[7]क्रमेण तु ।
कुम्भकाद्यं समारभ्य द्विविधोऽयं प्रकीर्त्तितः ॥ ३१० ॥

[8]पूर्वोक्तवन्हिभेदेन भेदबाहुल्यमीरितम् ।
कलाशृंखलिकायोगात्प्रस्तारः पूर्वसूचिताः ॥ ३११ ॥

वर्णक्रमो महेशानि कथ्यते श्रृणु साम्प्रतम् ।
स्वरैः पूरकमाचर्य वर्णैः[9] कुम्भककं भवेत् ॥ ३१२ ॥

आद्या तु नासिका प्रोक्ता चतुस्त्रिंशतिकं[10] पुनः ।
कृत्वा तु कुंभकं देवि द्विरावृत्या स्वरैः शिवे ॥ ३१३ ॥

रेचकं कारयेद्देवि प्राणायामत्रयं शिवे ।
पूर्वोक्तक्रमयोगेन प्रस्तारक्रम ईरितः ॥ ३१४ ॥

केवलेन स्वरेणैव कलाषट्वेदसंयुतम्[11] ।
अत्र पूर्वोक्तयोगेन प्रस्तारभेदभाजनम् ॥ ३१५ ॥

ईडया कर्षयेद्वायुर्बाह्यषोडषमात्र[12]या ।
धारयेत्पूरकं[13] योगी[14] चतुःषष्ट्या तु मात्रया ॥ ३१६ ॥

सुषुम्णामध्यगं[15] सम्यक् द्वात्रिंशन्मात्रया शनैः ।
नाड्या पिङ्गलया चैनं रेचयेद्योगवित्तमः ॥ ३१७ ॥

प्राणायाममिमं[16] प्राहुर्योगशास्त्रविशारदाः ।
भूयोभूयः क्रमात्तस्य व्य[17]त्या[18]सेन समाचरेत् ॥ ३१८ ॥

मात्रावृद्धिक्रमेणैव सम्यक् द्वादश षोडश ।
जपध्यानादिभिर्युक्तं सगर्भं तं विदुर्बुधाः ॥ ३१९ ॥

---

1. C °गा° । 2. C °लं । 3. B °द्या° । 4. BD omit two lines. 5. B °र्वृद° । 6. B °तीयं वा । 7. C पर्व° । 8. D omits four lines. 9. N स्वरैः । 10. CN °के । 11. B वेदरं युषं; C वैदिकं पुजं । 12. C बाल° । 13 B °के । 14. B योगो । 15. N °ले; B °गा । 16. D °दं । 17. B वि° । 18. B °न्या° ।

तदपेतं[1] विगर्भं तु[2] प्राणायामं परे[3] विदुः।
क्रमादभ्यसतां पुंसां देहे स्वेदभ्रमोद्गम[4]: ॥ ३२० ॥
अगर्भं तु महेशानि एतदन्यं शृणु प्रिये।
मध्यमः कम्पसंयुक्तो भूमित्यागोऽपरो[5] मतः[6] ॥ ३२१ ॥
मध्यमस्तु ससन्धिः स्यात्परः साध्याख्यको भवेत्।
पंचधा कथितो देवि प्राणायामक्रमो मया[7] ॥ ३२२ ॥
प्राणायामजपासक्तः सिद्धयोगीश्वरो भवेत्।
प्राणायामजपेनैव किन्न सिध्यति भूतले ॥ ३२३ ॥
पलनाडी[8]मुहूर्ताख्यः तद्द्वयं[9] प्रहरक्रमात्।
दिवाहोरात्रयोगेन साधयेत् स्थिर[10]मानसः ॥ ३२४ ॥
एवं साधयतः पुंसो योगाः सर्वेऽपि हस्तगाः।
प्राणायामजपो देवि मुख्यत्वेन प्रकीर्तितः ॥ ३२५ ॥
तदभावे महेशानि प्राणायामं च वा चरेत्।
भूतशुद्धिविधौ योज्यः शोषणादिविधौ शिवे ॥
प्राणायामक्रमेणैव त्रिः सकृद्वा समाचरेत्।
नंदसंख्या यदा भूयात्प्राणायामस्तदा चरेत्[11] ॥
केरलाख्यक्रमे देवि न च शोषणमीरितम्।
काश्मीराख्यक्रमे देवि शोषणादि समाचरेत् ॥
गौडः काश्मीरतुल्यः स्याच्चैतन्यस्तु चतुर्थकः।
प्राणायामक्रमो देवि भूतशुद्धिक्रमोऽपि च ॥
यथायोगं[12] योजनीयं किमन्यच्छ्रोतुमिच्छसि।

इति श्रीशक्तिसङ्गममहातन्त्रराजे उत्तरभागे तृतीयखण्डे श्रीमदक्षोभ्यमहोग्रतारासंवादे
प्राणायामजपो नाम तृतीयः पटलः।

1. D °दायत्तं। 2. C °र्भेण। 3. BCD परं। 4. CDN °द्गमोधमः। 5. B °गोऽपरो। 6. B भवेत्। 7. D °तः। 8. D पुनर्नाडी। 9. D तन्नाडी। 10. D शिव°। 11. B भवेत्। 12. BC °यथा।

## चतुर्थः पटलः ।

**श्रीदेव्युवाच ।**

पूर्वं संसूचितं यन्मे मंत्रप्रस्तारनिर्णयम् ।
तन्मे कथय देवेश यद्यहं तव वल्लभा ॥ १ ॥

**श्रीशिव उवाच ।**

गोप्याद्गोप्यतरं देवि स्वयोनिरिव पार्वति ।
तर्हि तत्ते वदाम्यत्र न वक्तव्यं त्वया शिवे ॥ २ ॥
चत्वारि शिवचक्राणि शक्तिचक्राणि पंच च ।
सामरस्याद्भवेचक्रं श्रीचक्रं सर्वरूपकम् ॥ ३ ॥
बिन्दोर्मन्वस्रपर्यन्तं[1] शक्तिचक्रं प्रकीर्तितम् ।
तदुत्तरं महेशानि द्वारान्तं शिवचक्रकम् ॥ ४ ॥
शुद्धचक्रमिदं प्रोक्तमिद[2]मेव त्रिधा भवेत् ।
भूः[3] कैलासस्तथा मेरु[4]प्रस्तारत्वेन पार्वति ॥ ५ ॥
भूप्रस्तारो द्विधा देवि पातालोर्ध्वक्रमेण तु ।
कैलासाख्यस्तु प्रस्तारो द्विविधः परिकीर्तितः ॥ ६ ॥
अर्धकैलाससञ्ज्ञस्तु पूर्णकैलासकस्तथा[5] ।
तथैव मेरुप्रस्तारः कीर्तितस्तु मया तव ॥ ७ ॥
सृष्टिस्थित्युपसंहारक्रमादष्टादशैव तु ।
सृष्टिस्थित्युपसंहारबीजलेखक्रमेण तु ॥ ८ ॥
ऋत्व[6]ग्निसंख्याः प्रस्तारास्त्वं[7]कानां वामतो गतिः ।
नित्यायाश्चैव तादात्म्यं प्रस्तारे[8] मेरुसंज्ञके ॥ ९ ॥
मातृकायाश्च तादात्म्यं कैलासाख्यं प्रकीर्तितम् ।
वाग्देवतायास्तादात्म्यं भू[9]प्रस्तारे प्रकीर्तितम् ॥ १० ॥
इमं यन्त्रं[10] तु षोडश्यां कीर्तितं तु[11] मया तव ।
[12]शुद्धमष्टादशाख्यं हि मातृकालेखनक्रमात् ॥ ११ ॥
सृष्टिस्थित्युपसंहारे बाणवेदविपर्ययः ।
अथवा तु दलाकारं सिद्धं यंत्रं तु कारयेत् ॥ १२ ॥
प्रस्तारैः पूर्वसप्रोक्तैः सृष्टिस्थितिलयादिकैः ।
एवं यं[13]त्रं तु निःशस्तं कीर्तितं तु मया तव ॥ १३ ॥
नव[14]संख्याविधैर्भेदैर्ललितायां महेश्वरि ।
प्रस्तारा बहवो देवि जायन्ते तानहं ब्रुवे ॥ १४ ॥

---

1. D °म्नं यं देवि ।　2. B °सिद्ध° ।　3. B भू° ।　4. B omits this portion.　5. D °तः ।　6. C मन्व° ।　7. CN °स्त्वे° ।　8. B °रो ।　9. B °त्म्यानु° ।　10. B °मत्र; CN मन्त्रं ।　11. N ते ।　12. D omits five lines.　13. B मं ।　14. D रवि° ।

कादिहादिमतेनै[1]व द्विधात्वं परि[2]कीर्त्तितम् ।
षड्भेदाः कादिषट्के तु कामराजादिकेऽपि षट् ॥ १५ ॥
एतद्विबो[3]धनं देवि कथ्यते शृणु सत्वरम् ।
चतुर्दशारं देवेशि कामराजे तु भि[4]द्यते ॥ १६ ॥
लोपादिषट्के शुद्धेऽन्ये[5] द्वितीय परिभिद्यते ।
[6]कादिषट्के तु हाद्ये च[7] दशारे भेदभाजनम् ॥ १७ ॥
लोपादिषट्के नेत्राद्ये दशारे भेदभाजनम् ।
एवं मिलित्वा देवेशि प्रस्तारा द्वादशेरिताः[8] ॥ १८ ॥
प्रत्येकं तु महेशानि पूर्वप्रस्तारभेदतः ।
सृष्टिस्थित्युपसंहार[9]लेखनक्रमतः[10] शिवे ॥ १९ ॥
सृष्टिस्थित्युपसंहारक्रमयोगेन पार्वति ।
दलाकारक्रमेणैव प्रत्येकं भेद[11]भाजनम् ॥ २० ॥
एकैकपत्रे देवेशि शतमष्टोत्तरं शिवे ।
त्रयोदशप्रभेदैस्तु प्रस्तारः परिकीर्त्तितः ॥ २१ ॥
चन्द्रच·द्रषडङ्कं च मुनिऋ[12]त्वङ्कसंख्यकम् ।
यन्त्रा[13]णि चोद्धृतान्यत्र प्रस्तार[14]क्रमयोगतः ॥ २२ ॥
रहस्यातिरहस्यं हि तव स्नेहादिहोदितम् ।
यस्य स्मरणमात्रेण साक्षाद्रुद्रो[15] भविष्यति ॥ २३ ॥
त्वया संकथि[16]ता देवि प्रस्ताराः पूर्वसूचिताः ।
ते सर्वे कथिता देवि गोपनीयं स्वयोनिवत् ॥ २४ ॥
एतदज्ञानतो देवि अथवा ज्ञानमोहितः[17] ।
यत्र कुत्र वसे[18]द्देवि यत्र कुत्र प्रपूजकः ॥ २५ ॥
स दरिद्रः[19] प्रभवति नात्र कार्या विचारणा ।
[20]श्रीविद्योपासको यो हि[21] देवेन्द्र इव चापरः ॥ २६ ॥
देवेन्द्रस्य महेशानि सिद्ध[22]लक्ष्मीः प्रकीर्तिता ।
श्रीविद्यापासकस्याथ लक्ष्मीनाम शृणु प्रिये ॥ २७ ॥
सर्वसंभोगसाम्राज्यलक्ष्मीः तस्य गृहे स्थिता ।
स दरिद्रः कथं देवि श्रीमद्ब्रह्माण्डनायकः ॥ २८ ॥

---

1. N °क्रमेणै° । 2. D द्विविधत्वं प्र° । 3. CD °द्धि वे° । 4. D वि° । 5. D शुद्धान्ये; C सिध्यन्ये । 6. B omits four lines. 7. N त्वाद्ये तु । 8. C °शादिताः । 9. C omits लेखन......संहार in the next line. 10. D °नेन क्रमात् । 11. B °कमेत्र । 12 B °स° । 13. DN पत्रा° । 14. D °र । 15. B. सम्राडस्यो; D साम्राडस्यो । 16. CN °कृपि° । 17. D एव हि । 18. B °देहे° । 19. D षड्भिरिन्द्रः । 20. D omit eights lines. 21. C देवि । 22. N द्धिः ।

एतदज्ञानतो देवि ज्ञानतोऽपि महेश्वरि ।
दरिद्रत्वं महेशानि भवत्येव न संशयः ॥ २९ ॥
स दारिद्र्यमवाप्नोति नात्र कार्या विचारणा ।
ज्ञात्वाऽपि देवदेवेशि यत्र कुत्र वदेद् यदि ॥ ३० ॥
स दारिद्र्यमवाप्यान्ते[1] रौरव नरकं व्रजेत् ।
पूर्णाभिषेके न श्रुवन्नामपारायणक्रमे ॥ ३१ ॥
मंत्रपारायणे देवि चक्रपारायणे तथा ।
मेधादीक्षान्तगा[2] दीक्षा[3] यस्य हस्ते विराजते ॥ ३२ ॥
तस्याधिकारो देवेशि यंत्रप्रस्तारनिर्णये ।
अधिकारो न चान्यस्य यः कुर्यात्स तु नारकी[4] ॥ ३३ ॥
दारिद्र्यान्म्रियते जंतुः[5] दारिद्र्ये तु निमज्जति ।
दारिद्र्यहरणं देवि योऽभिवाञ्छति सर्वदा ॥ ३४ ॥
स दीक्षितः पुरा भूयात्पश्चात्प्रस्तारदर्शकः ।
एतज्जानाति यः सम्यक् स शिवो नात्र संशयः ॥ ३५ ॥
शिवः सत्यं शिवः सत्यं शिवः सत्यं न संशयः ।
शिव एव परो देवि सर्वथा पूजयेच्च तम् ॥ ३६ ॥
तस्य पूजनमात्रेण तुल्यो[6] लक्ष्मीपतिर्भवेत् ।
किं बहूक्तेन देवेशि कादिहादिमतात्मकम् ॥ ३७ ॥
गोपनीयं [7]महेशानि स्वयोनिरपरा यथा ।
राज्यं दद्यात् शिरो दद्यात् स्त्रियं दद्यान्महेश्वरि ॥ ३८ ॥
न तु दद्यादिदं शास्त्रं सर्वथाऽपि प्रगोपयेत् ।
इति संक्षेपतः प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ॥ ३९ ॥
यन्त्रप्रस्तारनामानं[8] स्तवं यः पठति प्रिये ।
सर्वसि[9]द्धीश्वरः साक्षान्महादेव इवापरः ॥ ४० ॥
[10]महेन्द्रजालमिन्द्रादिजालानां रचना तथा ।
पातालखेचरीसिद्धिर्गुटिकाञ्जनमेव च ॥ ४१ ॥
यक्षिणीखड्गसिद्धिस्तु तस्य हस्त[11]प्रवेशि[12]का ।
ब्रह्माण्डगोलके या च या काचिज्जगतीतले ॥ ४२ ॥
समस्ताः सिद्धयस्तस्य भवन्त्येव न संशयः ।
प्रस्तार[13]स्मरणादेव[14] ये ये तस्य हि सिद्धयः ॥ ४३ ॥
स्वयमायान्ति पुरतो रचनायास्तु का कथा ।
यन्त्रपारायणं नाम स्तवं देवि[15] प्रकीर्त्तितम् ॥ ४४ ॥

1. B °प्नोति । 2. B °या । 3. D महादेवि । 4. D पातकी । 5. D यस्तु । 6. B स्वन्यो । 7. B omits महेशानि......दद्यादिदं in the third line. 8. CN °नि । 9. C °ऋ° । 10. C omits this line. 11. B द्वास्था । 12. N °टि°; C °णि° । 13. B °व° । 14. N °देवि । 15. D मस्तके ।

नाडीपारायणं नाम नामपारायणं तथा ।
मंत्रपारायणं नाम[1] चक्रपारायणं तथा ॥ ४९ ॥

यंत्रपारायणं देवि प्रत्यहं कारयेत्प्रिये ।
एकावर्तनमात्रेण त्रैलोक्यविजयी[2] भवेत् ॥ ४६ ॥

आवर्तनद्वये श्रीशः[3] त्रिरावर्तनमात्रतः ।
त्रिगुणात्मा भवत्येव नात्र कार्या विचारणा ॥ ४७ ॥

पंचावर्तनमात्रेण राजराजेश्वरो भवेत् ।
यावद्धि दर्शनं भूयात्तावद्धि परमेश्वरि ॥ ४८ ॥

अर्णवस्य च मर्यादा कीर्तिता परमेश्वरि ।
यं यं कामं विचिन्त्याथ स्तोत्रमेतत्पठेत्सदा ॥ ४९ ॥

तं त काममवाप्यान्ते तत्तद्रूपो भवेन्नरः[4] ।
किं बहूक्तेन देवेशि राजराजेश्वरी तु सा[5] ॥ ९० ॥

यथा छिन्ना तथा काली तथैव सुन्दरी परा ।
तथैव तारा संदिष्टा चतुर्णां न हि भिन्नता ॥ ९१ ॥

कालिकायामपि तथा यन्त्रपारायणं चरेत् ।
कादिहादिमतत्वेन द्विधात्र परि[6]कीर्त्तितम् ॥ ९२ ॥

एतज्ज्ञानयुतं दृष्ट्वा दण्ड[7]वत्प्रणिपत्य च ।
देववत्पूजनं कुर्यादन्यथा न हि सिध्यति ॥ ९३ ॥

[8]यन्त्रप्रस्तारराजानं यन्त्रपारायणं[9] परम् ।
नाम ख्यातं महेशानि शिवशक्त्यात्मकं तथा ॥ ९४ ॥

शिवशक्त्यात्मकं देवि यत्किञ्चिज्जगतीतले[10] ।
तस्माच्छक्त्यात्मकं देवि जगत्स्थावरजङ्गमम् ॥ ९५ ॥

सर्वस्वं तु मयाख्यातं किमि[11]तोऽपि विशेषणम्[12] ।
भेदप्रस्तारसिद्ध्यर्थमङ्कान् शृणु महेश्वरि ॥ ९६ ॥

रात्र्यष्टकु[13]णपाक्ष्यं[14] हि शक्तिचिह्नाभिधस्ततः ।
विष्णुकेतुगजावर्तक्रमेण परिकीर्त्तितः ॥ ९७ ॥

प्रथमस्य दशारस्य प्रोक्तो रेखाविनिर्णयः ।
एवं पञ्च चतुर्भेदाः[15] सर्वसिद्धिप्रदायकाः ॥ ९८ ॥

द्वितीयस्य दशारस्य रेखाङ्कानां[16] विनिर्णयः ।
ऋत्व[17]ष्टगणमारान्त्यादर्थवीरादिभिस्ततः ॥ ९९ ॥

---

1. B देवि । 2. D राजराजेश्वरो । 3. CN श्रीः स्यात् । 4. B °त्वरः । 5. D °रोत्तमः । 6. D भिन्नं प्रकी° । 7. B दृढ° । 8. B omits two lines. 9. N °णा । 10. DN°ळं । 11. B °म° । 12. B °तः । 13. B °गु°, C °क° । 14. D °लपक्षो । 15. BDN °तुर्भेदा वै । 16. D °वश्वकोण° । 17. DN °ष्य° ।

नाथमार्गक्रमेणैव दिनवेधेन सिध्यति ।
रश्मिद्वंद्वं रसो वाणी चैवं रेखां विभेदयेत्[1] ॥ ६० ॥
एवं पञ्च[2] प्रभेदाः स्युर्मन्वस्ते[3] शृणु साम्प्रतम् ।
नित्या वाणी मातृकाद्भिः सं[4]ख्यावर्तेन वै भवेत् ॥ ६१ ॥
द्वितीयस्य महेशानि गुणवाक्‌रसचंद्रता[5] ।
कला[6]योजनमार्गेण द्वितीयं परिकीर्तितम् ॥ ६२ ॥
इति संक्षेपतः प्रोक्तं फलसंकथनं शिवे ।
जिव्हाकोटिसहस्रैस्तु वक्त्रकोटिशतैरपि ॥ ६३ ॥
महिमां वर्णितुं चास्य[7] न शक्नोमि महेश्वरि ।
इति संक्षेपतः प्रोक्तं तत्त्वन्यासक्रमं शृणु ॥ ६४ ॥
आत्मविद्याशिवैस्तत्त्वैस्तत्त्वन्यासं[8] समाचरेत् ।
पादादि नाभिपर्यन्तमात्मतत्त्वं प्रकीर्तितम् ॥ ६५ ॥
नाभ्यादि हृदयान्तं हि विद्यातत्त्वं प्रकीर्तितम् ।
हृदयाद्बिन्दु[9]पर्यन्तं शिवतत्त्वं प्रकीर्तितम् ॥ ६६ ॥
सर्वमन्त्रं[10] समुच्चार्य[11] सर्वाङ्गे व्या[12]पनं शिवे ।
सर्वतत्त्वमिदं प्रोक्तं सर्वदेवत्वकारकम् ॥ ६७ ॥
तिथितत्त्वानि देवेशि आत्मतत्त्वे भवन्ति हि ।
पंचविंशतितत्त्वानि विद्यातत्त्वे भवन्ति हि ॥ ६८ ॥
[13]षट्‌त्रिंशच्छैव[14]तत्त्वानि शिवतत्त्वे भवन्ति हि ।
अथ पंचाशत्तत्त्वानि सर्वतत्त्वे भवन्ति हि ॥ ६९ ॥
स्था[15]पने वेदतत्त्वानि शोधने तत्त्वपंचकम् ।
भूतशुद्धौ त्रिःक्रमेण आचामेच्च त्रितत्त्वतः ॥ ७० ॥
सर्वमंत्रे महेशानि आचामेत्तत्त्ववैदिकीम् ।
[16]बीजमध्यगतं नाम किं वा कुर्याद्धि सङ्कुलम्[17] ॥ ७१ ॥
किं वा नाम्ना समाक्रान्ते मंत्रे तत्त्व[18]प्रकल्पना ।
एकाक्षरे त्र्यक्षरादौ तत्त्वास्पदविवर्जिते ॥ ७२ ॥
तत्त्वन्यासोदितं सिद्धं नान्यत्र[19] परिकल्पयेत् ।
सिद्धविद्याविधौ देवि श्रीविद्यायां महेश्वरि ॥ ७३ ॥
सर्वभेदाद्ध्यतत्त्वानि त्रितत्त्वे निवसन्ति वै ।
त्रितत्त्वस्य परिज्ञानी शक्ति[20]पाताधिपो[21] भवेत् ॥ ७४ ॥

---

1. D °भावयेत् । 2. B °यन्त्र° । 3. B न्तो; D र्मानुषे । 4. BD सा° । 5. D °तः । 6. B काल° । 7. B मास्येन । 8. C न्यासमेवं । 9. D °न्मूर्वं° । 10. B °न्त्रे । 11. B °र्यं । 12. B °हैर्व्या° (ग) । 13. C omits this line. 14. D °कवैत्र° । 15. C व्या° । 16. B reads बीजमध्यनात्वे वैदिकी बीजभ्यगे मामकी चा कुर्यादिसङ्कुलम्(?) । 17. C °ला । 18. C तन्त्रे । 19. D सिद्धान्ततत्त्वान्यत्र; C °द्धतन्त्रतत्पत्र° । 20. D सज्जि° । 21. C°को° ।

आलापादशनात्स्पर्शा[दाना]दनुग्रहा[1]दपि ।
तत्स्पृष्टवस्तुसंस्पर्शा[2]न्मन्त्रदानाज्जपा[3]दपि ॥ ७५ ॥
जिह्वाया मन्त्रसंलेखात्ताम्बूलोच्छिष्टभक्षणात् ।
गण्डूषाद्वस्त्रजलतस्त्वभिमन्त्रणयोगतः ॥ ७६ ॥
तन्नामस्मरणात्क्रोशशतान्ते स्मरणादपि ।
यन्निःसृत तत्तथैव शापानुग्रहणे शिवे ॥ ७७ ॥
सर्वशास्त्ररहस्यज्ञस्तथा श्रु[4]तिधरो भवेत् ।
अष्टादशविधो देवि शक्तिपातो भवेच्छिवे ॥ ७८ ॥
अथवा सिद्धिबाहुल्यं मया[5] वक्तुं न शक्यते ।
तत्र चेत्[6] सिद्धिबाहुल्यमिच्छाशक्तिपरो भवेत् ॥ ७९ ॥
शक्तिसंसर्गमात्रेण सर्वं पूतं भवेच्छिवे ।
शक्तिं विना न[7] वै मुक्तिः शक्तिर्मोक्षप्रदा मता ।
इति संक्षेपतः प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ॥ ८० ॥

इति श्रीशक्तिसङ्गममहातन्त्रराजे उत्तरभागे तृतीयखण्डे श्रीमदक्षोभ्यतारासंवादे
मन्त्रप्रस्तारनिर्णयो नाम चतुर्थः पटलः ।

---

1. D °दनुग्राहि भवे° । 2. C °संपन्न° । 3. B °ला° । 4. B भू°; CN सृ° ।
5. B °मतो । 6. B बत । 7. C °त्र ।

## पञ्चमः पटलः ।

श्रीदेव्युवाच ।

देवेश श्रोतुमिच्छामि पूर्वोक्तं निर्णयं महत् ।

श्रीशिव उवाच ।

रहस्यातिरहस्यं च कथ्यते शृणु साम्प्रतम् ॥ १ ॥
स्नानमुख्याः क्रियाः सर्वाः स्नानं च दैवते भवेत् ।
प्रातःकाले च [1]मध्याह्ने सायाह्ने स्तोत्रपाठके ॥ २ ॥
यदा यदा मनोग्लानिस्तदैव स्नानमाचरेत् ।
[2]* * * ब्रह्मयोगे म्लेच्छस्पर्शे तथैव च ॥ ३ ॥
भाषणे पतितस्याथ मन्त्रस्नानं समाचरेत् ।
श्रीविद्यायां चतुःकालं कालिकायां त्रिकालक[3]म् ॥ ४ ॥
यदैव[4] मनसो ग्लानिस्तदैव स्नानमाचरेत् ।
विद्योच्चारं [5]तु यः कुर्यादस्नातः कृतभोजनः ॥ ५ ॥
तस्य विद्या भवेन्नष्टा रौरवं नरकं व्रजेत् ।
अशुचिः सन् महेशानि विद्योच्चारं तु यश्चरेत् ॥ ६ ॥
तस्य नाशो भवेद्देवि विद्या दग्धा भवेद्ध्रुवम् ।
स्नानकालाश्च सम्प्रोक्ताः स्नानभेदान् शृणु प्रिये ॥ ७ ॥
स्नानं पञ्चविधं प्रोक्तं येन देवीमयो भवेत् ।
[6]वारुणं नाभसं चैव तृतीयं भस्मजं स्मृतम् ॥ ८ ॥
चतुर्थं तैजसं देवि पञ्चमं दैवतं भवेत्[7] ।
ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः ॥ ९ ॥
एते पञ्च महादेवाः[8] पञ्चस्ना[9]ने व्यवस्थिताः ।
परा च तदतीता च तत्परा तदनन्तरम्[10] ॥ १० ॥
चित्परा तदतीता च पंचमी परिकीर्तिताः[11] ।
वारुणं द्विविधं प्रोक्तं वैदिकं तांत्रिकं तथा ॥ ११ ॥
स्वशाखोक्तविधानेन वैदिकं स्नानमीरितम् ।
स्वस्वकल्पोक्तविधिना तांत्रिकं स्नानमाचरेत् ॥ १२ ॥
वीराणां[12] तु कनिष्ठं [13]स्यात्रितयं शृणु पार्वति ।
उत्तमं तु महेशानि सर्वत्र परिकीर्तितम् ॥ १३ ॥

---

1. B मा° । 2. B omits two lines. 3. BD °ज° । 4. C पदेन । 5. B omits तु यः .........विद्योच्चारं in the third line. 6. In B these two lines follow पञ्चस्नाने व्यवस्थिता. in the fourth line. 7. B स्मृतम् । 8. BCD सत्त्वाः । 9. BD °स्था° । 10. D °तीतका । 11. N omits. 12. CN रविणां; D नवी तु । 13. D omits from स्यात् to the end of the third line.

मध्यमं तु महेशानि प्राणायाम[1]पुरःसरम् ।
ऋष्यादिकं प्रविन्यस्य सप्तमुद्रापुरःसरम् ॥ १४ ॥

जलमानीय देवेशि सर्वाङ्गे मूलमुच्चरन्[2] ।
दशधा सप्तधा वापि देहं संमार्जयेच्छिवे ॥ १५ ॥

[3]कुशेन दूर्वया वापि ह्यथवा तत्त[4]मुद्रया ।
ततस्तु तिलकं देवि दशधा वाग्यतो[5]ऽथवा ॥ १६ ॥
उर्ध्वपुंड्रं त्रिप्रकारं त्रि[6]पुंड्रं [7]द्विप्रकारकम्[8] ।
अगस्तिपत्राकारं तु पट्ट[9]बन्धनमेव च ॥ १७ ॥

अगस्तिपत्राकारं तु सिन्दूरैर्घुसृणेन च[10] ।
कुचन्दनेन वा देवि योगमार्गेण कारयेत् ॥ १८ ॥

पूर्वोक्तं मंत्रमात्रे[11] स्यादिदं श्रीकालिकामनौ ।
सर्वदेवेऽपि कर्तव्यं स्वस्वयंत्रेण[12] पार्वति ॥ १९ ॥

मणिबन्धादधो हस्तौ पादौ गुल्फा[13]दधः प्रिये ।
आननं क्षालयेद्देवि ताराच्छिन्नाविधौ शिवे ॥ २० ॥

कारयेत्स्नानमेतद्धि पञ्चाङ्गशुद्धिदायकम् ।
वारुणं कथितं देवि नाभसं शृणु पार्वति ॥ २१ ॥

अष्टा[14]दशविधं देवि नाभसं परिकीर्तितम् ।
शुद्धा नमाताः स्वाहाताः तर्पणांता जयांतिकाः[15] ॥ २२ ॥
मालामनुः पंचविधः शिवशक्तिक्रमेण च ।
तद्द्वयक्रमयोगे[16]न मंत्राः पंचदश स्मृताः ॥ २३ ॥
साधकः कृष्णप्रतिपदित्यादि(?) फाल्गुनांतकम् ।
रश्मिक्रमेण देवेशि षट्चक्रक्रमगेऽ[17]पि च ॥ २४ ॥
प्रोक्तमष्टादशविधं स्नानं[18] नाभससंज्ञकम् ।
मूलाधाराद्धि[19]लातं च संभाव्य याभवाति[20]कम्[21] ॥ २५ ॥
रश्मयोऽत्र[22] महेशानि त्रिशतं षष्टि कीर्तिताः ।
वर्षमात्रं तु जान्हव्यां स्नानं त्रिषवणं[23] कृतम् ॥ २६ ॥

तत्फलं प्राप्नुयाद्देवि नात्र कार्या विचारणा ।
ऋत्वादिक्रमयोगेन तत्तदृतु[24]भवैर्जलैः ॥ २७ ॥

1. B °पान° । 2 B °रेत् । 3. DN के° । 4. BD °त्त्व° । 5. BN दशांगगतो°; C द्वादंश गणना° । 6. B द्वि° । 7. C त्रि° । 8. C °शजम् । 9. B °द° । 10. C omits this line. 11. C °त्रे । 12. D स्वमन्त्रे यश्च । 13. B हस्ता° । 14. B अस्य । 15. D जपादिका· । 16. B °भेदे° । 17. N °स्य क्रमे, B क्रमेऽपि; D °क्रमणे° । 18. B प्रोक्तं । 19. N °द्विद° । 20. N °म्बि° । 21. D नभसादिमकाम् । 22. C एष एव । 23. D स्नानदानं सकृत् । 24. B तद्गत° ।

स्नाने कृते फलं यच्च सकृदेव भवेच्च तत् ।
रश्मिक्रमेण देवेशि साक्षाच्छाम्भवरूपभाक् ॥ २८ ॥
प्रतिचक्रे महेशानि चक्रान्तस्तस्य देवताः[1] ।
चिंतयेत्प्रयतो[2] भूत्वा[3] मूलाधाराद्बिलान्तकम् ॥ २९ ॥
अन्तःस्नानमिदं प्रोक्तं देवतादर्शनप्रदम् ।
[4]ब्रह्मरन्ध्रे तु देवेशि मर्वेषा ल यमाचरेत् ॥ ३० ॥
पुनः शुद्धि[6]स्वरूपं तु[7] विभाव्य जपमाचरेत् ।
नाभसं कथितं स्नानं भस्मस्नानं शृणु प्रिये ॥ ३१ ॥
अग्निर्जलं स्थलं चेति वायुर्व्योमेति स[8]र्वतः ।
अभ्रका[9]भिस्त्रिभिर्देवि स्नानं मृत्युज्वरापहम् ॥ ३२ ॥
शैवऋक्पंचकेनै[10]व द्वितीयं परिकीर्तितम् ।
श्रीमालिन्या[11]दिभिर्देवि श्रीविद्यायां तृतीयकम् ॥ ३३ ॥
सूर्यमं[12]त्र भस्ममध्ये तेन सर्वाङ्गलेपनम् ।
ध्यानोक्तं होमकुण्डस्थं भस्मना पंचमं भवेत् ॥ ३४ ॥
अन्येऽपि[13] बहवो भेदाः सन्ति च प्राणको[14]दिताः ।
तैजसमथ[15] वक्ष्यामि येन सिध्यन्ति सिद्धयः ॥ ३५ ॥
गुरुदैवतमंत्राणामैक्यं सम्भावयन्धिया[16] ।
गुरुतेजो मंत्रतेजो देवतेज[17]स्तथैव च ॥ ३६ ॥
एकीकृत्य त्रिचैतन्यं तन्मूर्तिं परिकल्पयेत् ।
हृदये देवतास्थानं कण्ठे चैव मनुर्मतः ॥ ३७ ॥
सहस्रारे गुरुः प्रोक्तस्त्रिचैतन्यं विभावयेत् ।
तां मूर्तिं[18] स्वस्य देहे तु यथा स्वावयवक्रमात् ॥ ३८ ॥
सम्भावयेन्महेशानि देवतादर्शनप्रदम् ।
तैजसं गदितं देवि दैवतं शृणु पार्वति ॥ ३९ ॥
मूलाधारं समारभ्य बिलान्तं परमेश्वरि ।
देवता भावयेद्देवि स्वमुखेन मुखं[19] शिवे ॥ ४० ॥
तस्याः सर्वाङ्गकं देवि स्वदेहे स्थानयोगतः ।
द्वारदेशे महेशानि गंगा च यमुनां तथा ॥ ४१ ॥
सर्वसम्भावनायां तु गंगया[20] किं फलं भवेत् ।
इडा गङ्गेति विख्याता सुषुम्णा यमुना[21] नदी ॥ ४२ ॥

---

1. D °तां; B ता । 2. B °पुरतो, D °परतो । 3. C देवि । 4. D omits three lines. 5. B स्व° । 6. C °द्ध° । 7. B. हि । 8. B प° । 9. N त्र्यम्बक्का°, B अवक्का° । 10. C चै° । 11. B °न्नित्या° । 12. B. °यं° । 13. C च । 14. N मणिको° । 15. DN °सं संप्र°; C सं च प्र° । 16. B °वयेद्धिया । 17. B °ताया । 18 B तन्मूर्त्तिः । 19. D तन्मुखं । 20. B °गायां । 21. N पिङ्गला ।

सरस्वती पिङ्गला स्यात्प्रयागं देह[1]मध्यगम्।
देह[2]ज्ञानं विना देवि बाह्यज्ञा[3]नेन किं फलम्॥ ४३॥
गुरुपङ्क्तिं[4] सहस्रारे ह्यंगानि भ्रुवि[5] भावयेत्।
कण्ठमूलांतकं देवि सर्वावरणदेवताः॥ ४४॥
भावयेद्यत्नतो देवि दैवतं स्नानमीरितम्।
अनेन स्नानयोगेन किं तद्यन्न करे स्थितम्॥ ४५॥
ब्रह्माद्या देवताः सिद्धाः स्नानेनानेन पार्वति।
इति संक्षेपतः प्रोक्तं सन्ध्या कर्म शृणु प्रिये॥ ४६॥
सुन्दर्यां तु चतुःकालं सन्ध्यावन्दनमाचरेत्।
प्रातःकाले च मध्यान्हे सायान्हेऽप्यर्धरात्रके॥ ४७॥
चतुर्विधां तु गायत्री जपेद्यत्नेन पार्वति।
प्रस्ताराकृति रूपा च उपस्थानाभिधा तथा॥ ४८॥
वांच्छाकल्पलता देवि चतुर्थी परिकीर्तिता।
षष्टिपारायणं प्रातर्मध्याह्ने नामसंज्ञकम्[9]॥ ४९॥
मंत्रपारायणं रात्रौ निशायां चक्रसंज्ञकम्।
तृती[10]यामर्धरात्रे तु तूर्यसंन्ध्या[11] समाचरेत्॥ ५०॥
कालिकायामिदं प्रोक्तमुपस्थानविवर्जितम्।
मेधादीक्षादिराज्ञीत्वा[12]त्काल्यां सन्ध्याचतुष्टयम्॥ ५१॥
सन्ध्यात्रयं तु[13] तारायां छिन्नायां त्रिविधा भवेत्।
एतासां न हि भेदोऽस्ति भेदभाङ्न[14]रकं व्रजेत्।
इति संक्षेपतः प्रोक्तं किमन्यच्छ्रोतुमिच्छसि॥ ५२॥

इति श्रीशक्तिसङ्गमहातन्त्रराजे उत्तरभागे तृतीयखण्डे श्रीमदक्षोभ्यमहोग्रतारासंवादे स्नानभेदनिर्णयो नाम पञ्चमः पटलः।

---

1. B न्मयागेहेदं। 2. N °हे। 3. CN स्ना°; D स्नेहस्ना°। 4. B भक्तिं। 5. D भूरि; B भ्रवि। 6. N °ख्या। 7. B च। 8. B °सरु°। 9. B °ज्ञिके। 10. B तुरी°। 11. C संज्ञं। 12. D वाज्ञात्वा। 13. CN च। 14. D भेदात्तु न°।

## षष्ठः पटलः ।

**श्रीदेव्युवाच ।**

देवेश श्रोतुमिच्छामि दीपेशादिविनिर्णयम् ।

**श्रीशिव उवाच ।**

बद्धपद्मासनो मूर्ध्नि[1] दीपनाथं प्रपूजयेत् ॥ १ ॥

वर्गाष्टकं[2] चाष्टदिक्षु स्वरद्वन्द्वसमन्वितम् ।
विलिखेत्तत्र वर्गे च महानादा[3]क्षरं भवेत् ॥ २ ॥

सत्यबिन्दुकः[4] प्रथमं श्रीकण्ठादि ततः परम्[5] ।
तद्वर्णेशं[6] नन्दनाथं च–चतुर्थमनन्तरम् ॥ ३ ॥

अतिरिक्तपदस्यान्ते[7] वर्णायेति समुद्ध[8]रेत् ।
रक्तद्वादशशक्त्यार्थ[9]युक्तायेति पदं वदेत् ॥ ४ ॥

अस्मिन्क्षेत्र इमां पूजां गृह्णयुग्ममथापि वा[10] ।
स्वाहान्तगो[11] मनुरयं दीपनाथस्य कीर्तितः ॥ ५ ॥

ईशाने दीपनाथं च पूजयेत्परमेश्वरि ।
उच्छिष्टो मृदमानीय नदीतीरद्वयात्तथा ॥ ६ ॥

रूपं तालमितं कृ[12]त्वा नामाणान्यस्य तद्धृदि[13] ।
नाममायास्त्रधत्तूर[14]लिखितं पूरितं भुवि ॥ ७ ॥

त्रिसप्त जपतो सार्धं वशयेदुर्वशीमपि[15] ।
अथान्यदपि[16] देवेशि रहस्यं कथ्यते शृणु ॥ ८ ॥

वामहस्ते * * धृत्वा दक्षहस्तेन होमयेत् ।
मालां दत्त्वा शक्तिहस्ते गणनां कारयेच्छिवे ॥ ९ ॥

द्वित्रिमासोत्तरं देवि मालां संग्रथयेच्छिवे ।
[17]स्वयं संत्रुटिता माला प्रायश्चित्ताय कल्पते[18] ॥ १० ॥

जीर्णसूत्रं तु विज्ञाय माला संग्रथयेच्छिवे ।
षण्मासोत्तरगं देवि जीर्णसूत्रस्य मालिका ॥ ११ ॥

यः स्थापयेन्महेशानि तस्य नाशो भविष्यति ।
त्रुटिता चेत्स्व[19]यं मालां प्रायश्चितं समाचरेत् ॥ १२ ॥

---

1. C वन्हया मासमूर्धन्या; B वन्ह्यमासनो मूर्ध्नि । 2. B रंगायकं । 3. C मदग्राद्या°; DN मद्ग्रामाद्य° । 4. C कस्तु । 5. B परे । 6. B °शा । 7. D स्यादि; C स्तस्य । 8. C °च्च° । 9. CN °सन्त्यूर्ध्वे । 10. D मखो यतः; N मथो यथा । 11. B न्तिमे; D न्तोऽयं । 12. C श्रु° । 13. B °द्व्रुती । 14. N मायात्रधर्तूर; D मयोस्तव तु बलिं । 15. Then follows the Mantra in BN ॐ उच्छिष्टचामुण्डे जम्भय २ मोहय २ अमुकं मे वशमानय स्वाहा । The Mantra is omitted in C. 16. D अन्यथा दीप । 17. C omits two lines. 18. D °येत् । 19. B °त्व° ।

[1]गजान्तकसहस्रं तु जपहोमं समाचरेत् ।
पुनः संग्रथनं कृत्वा प्राणस्थापनपूर्वकम ॥ १३ ॥
तदा माला सिद्धिदा स्यान्नान्यथा शाङ्करं वचः ।
पुरश्चर्याजपे होमे माला हस्तच्युता यदि ॥ १४ ॥
प्रायश्चित्तं शतं जप्त्वा तद्दशांशप्रवर्धनम्[2] ।
तद्दशांशं त्यजेज्जापं[3] प्रायश्चित्तक्रमेण च ॥ १५ ॥
केचिदत्र समि[4]च्छन्ति पुरश्चर्या पुनर्भवेत् ।
प्रायश्चित्तं[5] शतं जप्त्वा पुरश्चर्यां पुनश्च[6]रेत् ॥ १६ ॥
अयुतं होमयेद्देवि पायसैर्नारिकेलजैः ।
त्रैलोक्यं च वशीकुर्यान्नात्र कार्या विचारणा ॥ १७ ॥
तिलतण्डुलहोमेन प्रीतिं सञ्जनयेत्प्रिये ।

**श्रीदेव्युवाच ।**

प्रसृति[7]स्तण्डुलाः प्रोक्ताः शतमात्रं[8] तिलाः स्मृताः ॥ १८ ॥
कथं साम्यं महादेवि तन्मे कथय शङ्कर ।
अर्धप्रसृतिमात्रं तु तण्डुला वा महेश्वर ॥ १९ ॥
पञ्चाशद्वा[9] तिला ग्राह्याः सन्देहं हर मे[10] प्रभो ।

**श्रीशिव उवाच ।**

प्रसृतिश्च[11] शतं देवि संयोगेन तु होमयेत् ॥ २० ॥
दक्षिणामुर्तिदेवस्य संमतं परिकीर्तितम् ।
अर्धप्रसृतिमात्रं तु तण्डुलाः परमेश्वरि ॥ २१ ॥
पञ्चाशच्च तिला ग्राह्या अक्षोभ्यऋषिसम्मतम्[12] ।
यवानां च तिलानां च यथा योगेन[13] चाहुतिः ॥ २२ ॥
तथैव तिलसंयोगः कर्तव्यः कालसंमतः ।
समतोलसमे कुण्डे[14] होमयेत्कालिकामते ॥ २३ ॥
* * * स्वमुखं दत्वा वामहस्तेन होमयेत् ।
देवता वरदा तस्य नात्र कार्या विचारणा ॥ २४ ॥
* * * * देवेशि होमयेदविचारयन् ।
त्रैलोक्याधिपतिर्भूयान्नात्र कार्या विचारणा ॥ २५ ॥
पात्रं[15] षोडशकं स्थाप्य सम्पूज्य परदेवताम् ।
तदन्ते[16] होमयेद्रात्रौ तदन्ते तर्पणं भवेत् ॥ २६ ॥

---

1. C omits this line. 2. D परित्यजेत्, N °ने । 3. C त्यजेद्दशांशं तज्जापं; D त्यजेद्दशांशतो जापं । 4. D °त्रापि इ° । 5. B °त्ते । 6. B °र्याशतं च° । 7. C प्रशान्ति° । 8. B °नं । 9. B °द्धि । 10. N हरय; B दूरय; C हृदये । 11. D अमृतश्च । 12. B °ते । 13. D होमेन । 14. C मनौ लब्धं समाचर्य । 15. B पत्र° । 16. D तदा च ।

देविशंखमुखं[1] नेत्रे देवतायाः समाचरेत् ।
केरलाख्यमते प्रोक्तं काश्मीराख्यमतं श्रृणु ॥ २७ ॥
यथा देवी[2] तथा देवीविशेषाख्यः प्रकीर्तितः ।
स्वसांमुख्येन देवेशि स्थापयेत्पात्रराशिकम् ॥ २८ ॥
चैतन्यस्य मते देवि तिर्यक् चक्रे[3]ण स्थापयेत् ।
स्वसांमुख्ये तथा तिर्यक् देवतासंमुखेऽपि च ॥ २९ ॥
प्राची नव[4] षट्[5] च प्रोक्ता कथमङ्गादिकल्पना ।
स्व[6]स्य प्राची च वा देवि[7] देवतायाऽथवा भवेत् ॥ ३० ॥

**श्रीशिव उवाच ।**

रहस्यातिरहस्यं च कथ्यते श्रृणु सादरम् ।
स्वसांमुख्ये स्थिते पात्रे देववच्चांग[8]कल्पनम् ॥ ३१ ॥
निरंजनमतं प्रोक्तं तत्सांमुख्येऽपि पार्वति ।
पार्वतीमतमाख्यातं रुद्रवीरमतं श्रृणु ॥ ३२ ॥
देवीपात्रं देवमुख्ये अंगादि स्वांगवद्भवेत् ।
तत्र प्राचीक्रमं ज्ञात्वा सर्वं संसाधयेद् ध्रुवम्[9] ॥ ३३ ॥
आसनाद्यं समारभ्य भूतशुध्यन्तगं शिवे ।
सिद्ध[10]प्राची तु सम्प्रोक्ता ततस्तु क[11]ल्पिता भवेत् ॥ ३४ ॥
स्थित्यादिपात्रकर्मान्तं सिद्धप्राची प्रकीर्ति[12]ता ।
पूजायां तु महेशानि कल्पिता दिक् शुभप्रदा ॥ ३५ ॥
अर्घ्यांत[13]पूजान्यसने कल्पिता दिक् च[14] शम्बरे[15] ।
महाभूतबलिर्देवि स्वस्य प्राचीविधौ भवेत् ॥ ३६ ॥
देवीबलिः स्ववामे तु स्वदक्षे मृड[16]सम्मते ।
अग्नीशासुरवायव्ये मध्ये दिक्ष्वङ्गपूजनम्[17] ॥ ३७ ॥
केरलस्य मतं प्रोक्तं चिद्घनस्य मतं श्रृणु ।
अग्निनैर्ऋतवायव्ये शंभुकोणेषु[18] मध्यतः ॥ ३८ ॥
चतुर्दिक्षु महेशानि मण्डलावर्तमार्गतः ।
अग्नीशासुरवायव्ये मध्ये पृष्ठे षडंगकम् ॥ ३९ ॥
केसरेषु च कोणेषु देहेषु च षडंगकम् ।
कालरुद्रमते[19] देवि षडङ्गपूजनं भवेत् ॥ ४० ॥
क्रमदुर्येण[20] कथितं प्राची चाङ्गप्र[21]पूजनम् ।
चतुरावर्तमार्गेण[22] संहाराख्यक्रमेण च ॥ ४१ ॥

1. N °खे । 2. °वे । 3. N वक्त्रे° । 4. D तत्र; B प्रव° । 5. B षका ।
6. D अ° । 7. B प्राच्यथवा । 8. BCD °ध्वांग° । 9. C °द्ध्रुवः । 10. D °द्धि° ।
11. B °स्तरक° । 12. B °कल्पि° । 13. BD °ग° । 14. C कूर्चे । 15. D शाङ्करि ।
16. D मुण्ड° । 17. B °ने । 18. C तु । 19. C °तं । 20. D °दर्पण ।
21. B चागम; D °चीना च प्र° । 22. N °योगेन ।

षडंगपूजनं प्रोक्त विशेषं शृणु सादरम् ।
अर्घपूजाविधौ सिद्धप्राची प्रोक्ता तु पीठके ॥ ४२ ॥
मृडेन[1] परमेशानि कल्पिता तु क्वचिद्भवेत् ।
क्वचित्सिद्धा महेशानि कल्पिता तु क्वचिद्भवेत् ॥ ४३ ॥
वायव्यदिशि पर्यन्तं गुरुपंक्ति प्रपूजयेत् ।
विद्यापृष्ठे महेशानि गुरवः सन्ति सर्वदा ॥ ४४ ॥
काल्यां त्रिपंक्ति[3]मार्गेण देवीपृष्ठक्रमेण च ।
दिव्यादिक्रमयोगेन तदध: स्वगुरुत्रयम् ॥ ४५ ॥
दक्षोदक् च[4] प्रतीच्यां च रेखात्रितयकं चरेत् ।
दिव्यौघो देवतापृष्ठे तदन्यौ त[6]त्स्थलद्वये ॥ ४६ ॥
विद्याया भेदभावे तु स्वगुरुं पूजयेच्छिवे ।
सर्वोपरि महेशानि गुरुस्थानं प्रकीर्तितम् ॥ ४७ ॥
सिद्धप्राचीविधौ देवि विलोके केरले मते ।
गौडे कल्पितदिङ्मार्गा य[9]था देवी तथैव ते ॥ ४८ ॥
न तेषां मुख्यता देवि मुख्या तु[10] देवता भवेत् ।

**आद्युवाच ।**

अत्रार्थे संशयो मेऽस्ति संशयं मम हारय[11] ॥ ४९ ॥
कल्पितक्रममार्गेण यदि पूजा भवेच्छिव ।
[12]तेषां दिग्व्यत्यये[13] देव स्थानस्य संच्यु[14]तिर्भवेत् ॥ ५० ॥

**श्रीशिव उवाच ।**

स्वामी यत्र[15] समायाति तत्रैवा[16]ङ्गादिदेवताः ।
न चांगे[17] मुख्यता देवि त[18]त्पूजायां तु मुख्यता ॥ ५१ ॥
दशांशेनांगमंत्राणां जपपूजां समाचरेत् ।
तेन ते सिद्धिदा देवि नान्यथा सिद्धिरोधकृत्[19] ॥ ५२ ॥
कदा को वा महादेवः का वा प्राची[20]स्थिता भवेत् ।
सूर्यस्तु वारुणीं याति नित्यानित्यं महेश्वरि ॥ ५३ ॥
दिवारात्रिव्यत्ययस्तु साधकस्य करे स्थितः ।
चन्द्रसूर्यव्यत्ययं च[21] स कर्तुं भवति क्षमः ॥ ५४ ॥
सूर्यस्थाने भवेच्चन्द्रः चन्द्रस्थाने तु सूर्यता ।
एवं क्रमेण देवेशि ब्रम्हाण्डानां परंपरा ॥ ५५ ॥

---

1. B ताम्रते; D अमृते। 2. B °व्यादीश°। 3. °शक्ति°। 4. C क्षे कूर्च°। 5. B °धौ। 6. D तदन्ते तु। 7. N °यां। 8. ND °गे। 9. B °द्य°। 10. B °ख्यता। 11. D दूरय, C संहर। 12. C ए°। 13. DN °यो। 14. B °मानसंच्यु°; C संसृ°। 15. CN °त्र। 16. B °त्र अ°। 17. B मार्गे। 18. B स°। 19. B °कं। 20. B का प्राची सं°। 21. BC व्ययं चैव।

कदा का वा स्थिता[1] प्राची कति जाताः पुरंदराः ।
[2]एकैकवारं देवेशि कीटाद्यपि पुरंदरः[3] ॥ ५६ ॥
कुत्र के वा स्थिता देवि सर्वं साधकगोचरम् ।
यदाशाभिमुखो भूत्वा चक्रराजं समुद्धरेत् ॥ ५७ ॥
सैव पूर्वा विनिर्दिष्टा सर्वत्र योजयेत्क्रमम् ।
यदा पूर्वमुखो भूत्वा चक्रेशी परिपूजयेत् ॥ ५८ ॥
तदा प्रतीची पूर्वा स्याद्देवताया महेश्वरि ।
पश्चिमाभिमुखो भूत्वा यदा चक्रं समुद्धरेत् ॥ ५९ ॥
पूर्वैव[4] पूर्वा निर्दि[5]ष्टा दक्षिणे शृणु पार्वति ।
दक्षिणाभिमुखो भूत्वा यदा चक्रं समुद्धरेत् ॥ ६० ॥
तदोत्तरा भवेत्पूर्वा प्रतीची दक्षिणा भवेत् ।
उत्तराभिमुखो भूत्वा यदा देवी प्रपूजयेत् ॥ ६१ ॥
दक्षिणैव भवेत्पूर्वा संक्षेपात्परमेश्वरि ।
तथा काम्यविधौ देवि विदिक्षु संस्थितो यदि ॥ ६२ ॥
देवि स्व[6]मध्ये पूर्वा तु संक्षेपेण प्रकीर्तिता ।
यथा यथा शिवा याति परिवारास्तथा तथा ॥ ६३ ॥
यस्याः कृपाकटाक्षेण स्थानं लब्धं च तैः पुरा ।
ते सेवार्थं[7] समायान्ति देवताया [8]महेश्वरि ॥ ६४ ॥
बलिदानविधौ देवि सिद्धा वा कल्पिता च वा ।
देवताहस्तदक्षाख्यः[9] स्वसांमुख्यक्रमेण च ॥ ६५ ॥
प्राची प्रोक्ता केरले च गौडे प्राग्दक्षभावतः[10] ।
दे[11]व्यग्रदलमारभ्य प्रा[12]दक्षिण्य[13]क्रमेण तु ॥ ६६ ॥
काश्मीराख्यमते प्रोक्तं पूजनं तत्क्रमेण तु ।
स्वदेहं च स्वदेवी च स्वगुरुं परमेश्वरि ॥ ६७ ॥
स्वदेहस्थितमार्गेण स्वरूपं पूजयेत्प्रिये ।
पूजाविधौ महेशानि स्वा[14]ग्रे संचित्य पूज[15]येत् ॥ ६८ ॥
अत्रापि देवदेवेशि स्वरूपेण स्व[16]रूपता ।
तद्रूपे[17] स्वस्य रूपं च तथैव च गुरो[18]रपि ॥ ६९ ॥
एवं क्रमेण देवेशि त्रितयं त्रितयं त्रिषु ।
मार्गत्रयक्रमेणैव सर्वं संक्षेपतो मतम् ॥ ७० ॥

1. D भवेत् । 2. C omits this line. 3. DN °राः । 4. °वें तु । 5. N संदि° । 6. B विश्व° । 7. D तोषेहार्थ । 8. B °र्थ । 9. D स्वेष्टदक्षा° । 10. B दिक्षु भावना । 11. B दि° । 12. C प्र° । 13. C °गा । 14. B प्रा°; D अ° । 15. C °र° । 16. C °प तस्य, D °षे तस्य । 17. C °द्भवैः । 18. C °णै° ।

बलिदानमवद्रव्यं देवता[1]ग्रे निवेदयेत् ।
स्वसांमुख्येन वा देवि तत्सांमुख्येन वा प्रिये ॥ ७१ ॥
केरलक्रमयोगेन काश्मीरक्रमयोगतः ।
गौडमार्गक्रमेणैव सर्वं संक्षेपतो मतम् ।
इति संक्षेपतः प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ॥ ७२ ॥

इति श्रीशक्तिसङ्गमहातन्त्रराजे उत्तरभागे तृतीयखण्डे श्रीमदक्षोभ्यतारासंवादे
दीपेशादिविनिर्णयो नाम षष्ठः पटलः ।

---

1. D °स्या° ।

## सप्तमः पटलः ।

**श्रीदेव्युवाच ।**

देवेश श्रोतुमिच्छामि रहस्यातिरहस्यकम् ।

**श्रीशिव उवाच ।**

भिन्नांजनं समारभ्य मा मैर्मा मै[1]र्महेश्वरि ॥ १ ॥
वृत्ता[2]नन्दं तु देवेशि ध्यात्वा[3] वाञ्च्छामितं[4] शिवे ।
शिखा[5]गतं स्मरेत् वन्हि[6] शिखासाधकरूपिणम् ॥ २ ॥
खड्गंतु देव्या रसनां बुद्धया ध्यात्वा महेश्वरि ।
साध्यस्य जाड्य[7]रूपत्वं शिखायां परमेश्वरि ॥ ३ ॥
साध्यस्य हृदये देवि देवी तिष्ठति सर्वदा ।
जाड्यं[8] तत्रैव देवेशि रसना लेह[9]भक्षणा ॥ ४ ॥
एवं ध्यात्वा जपेद्वीरस्त्रैकाल्यज्ञानमाप्नुयात् ।
ताराविधौ महेशानि काम्य[10]ध्यानं महेश्वरि ॥ ५ ॥
प्रत्यालीढं समारभ्य पंचमुद्राविभूषितम्[11] ।
इत्येतं चिन्त्य[12] यत्नेन जाड्यं न्यस्य कपालके ॥ ६ ॥
कर्त्र्या संकर्तनं चिन्त्यं[13] त्रैलोक्याधिपतिः कविः ।
राज्यदातृ[14]त्वसामर्थ्यं नहि तारा विना[15] कलौ ॥ ७ ॥
× × × × सक्तामाग्नेयीनाडिकागताम् ।
शवस्य हृदये न्यस्त दक्षिणं चरणं शुभम् ॥ ८ ॥
शवस्य पादयुगलमनुलोमा[16]कृतिक्रमात् ।
संन्यस्य वामचरणे प्रत्यालीढं तदुच्यते ॥ ९ ॥
साधनायां दक्षशिरः प्राक् प्रत्यक् च शिरः सदा ।
शवस्वरूपं कथितं वामहस्तं[17] हृदि[18] स्थितम्[19] ॥ १० ॥
चतुर्भुजा कालिका स्यात् धनुरायुधधारिणी ।
कपाल पञ्चमं चेत्स्यात् वरहस्ते विधारयन्[20] ॥ ११ ॥
मुण्डरूपं कपालं तु महाकाल[21]मते मतम् ।
कलौ तारा कलौ काली कलौ तारा च कालिका ॥ १२ ॥
शिवशक्तिप्रभेदेन देहे शक्तिरु[22]पस्थिता ।
तारा शिवस्तथा काली शक्तिरूपा प्रकीर्त्तिता ॥ १३ ॥

---

1. B मानैर्मानै° । 2. N पूता; C पूता; D प्रीता । 3. C स्मिध्या । 4. D °मं । 5. B चिद्रूपा° । 6. B °च्चन्द्रं । 7. B °ग्र° । 8. B °ग्रं । 9. C स्नेह° । 10. D °ली° । 11. B °ता । 12. C चित्र° । 13. D यत्य; C नित्य । 14. B °न° । 15. B सारां:विना; C साराम्बिका । 16. D °म° । 17. B वामद; D °हस्त° । 18. B हरि° । 19. BD °द्वयम् । 20. N °येत् । 21. C °माला° । 22. DN °सु° ।

काली शिवस्तथा तारा शक्तिरूपा प्रकीर्त्तिता ।
अहो ज्ञानवतां ज्ञानी कालीतारा[1]परायणः ॥ १४ ॥
रहस्यातिरहस्यं च प्रोक्तं देवि तथाग्रतः ।
देशव्यवस्थां देवेशि कथ्यते शृणु यत्नतः[2] ॥ १५ ॥
वैद्यनाथं समारभ्य भुवनेशांतगं शिवे ।
तावदंगाभिधो देशो या[3]त्रायां न हि दुष्यति[4] ॥ १६ ॥
रत्नाकरं[5] समारभ्य ब्रह्मपुत्रांतगं शिवे[6] ।
वंगदेशो मया प्रोक्तः सर्वसिद्धिप्रदाय[7]कः ॥ १७ ॥
जगन्नाथात्पूर्वभागात्कृष्णातीरान्तगं शिवे ।
कलिंगदेशः संप्रोक्तो वाममार्गपरायणः ॥ १८ ॥
कलिंगदेशमारभ्य पंचाष्टयोजनं शिवे ।
दक्षिणस्यां[8] महेशानि का[9]लिंदः[10] परिकीर्तितः ॥ १९ ॥
सुब्रह्मण्यं समारभ्य यावद्देवो[11] जनार्दनः[12] ।
तावत्केरलदेशः स्यात्त[13]न्मध्ये सिद्धि[14]केरलम् ॥ २० ॥
रामेश्वरो वें[15]कटेशो हंसकेरलबोधकः ।
अनंतशैल[16]मारभ्य यावत्स्याद्दुड्डुपं[17] पुरम्[18] ॥ २१ ॥
तावत्सर्वेशनामा तु केरलः परिकीर्तितः ।
शारदामठमारभ्य कुंकुमाद्रि[19]तटान्तकम् ॥ २२ ॥
तावत्काश्मीरदेशः स्यात्पंचाशद्योजनान्तकः[20] ।
का[21]लेश्वरं श्वतगिरिं त्रिपुरां नीलपर्वतम् ॥ २३ ॥
कामरूपाभिधो देवि गणेशगिरिमूर्धनि ।
त्रिपंचकं[22] समारभ्य मध्ये चोज्जयिनी शिवे ॥ २४ ॥
मार्जारतीर्थं[23] राजेन्द्रे कोलापुरनिवासिनम् ।
तावद्देशो महाराष्ट्रः कार्णाटस्या[24]भिगोचरः ॥ २५ ॥
जगन्नाथादू[25]र्ध्वभागं[26] अर्वाक् श्रीभ्रमराम्बिका ।
तावदंध्राभिधो देशः सौराष्ट्रं शृणु सादरम् ॥ २६ ॥

---

1. BD °नाम° । 2. D तत्परः । 3. B मा° । 4. B °ते । 5. B वज्राकरं, C वज्राकारं । 6. D प्रिये; BD परे । 7. CN °दर्श° । 8. B °स्य । 9. BD क° । 10. BD °ङ्गः । 11. N °वं । 12. N °नं । 13. C omits °न्मध्ये to स्यात् in the sixth line. 14. B °द्ध° । 15. N वैं°, D व्यं° । 16. B °सेन । 17. B दुंदुपं; D घद्वपं । 18. N परे । 19. D °धि° । 20. B °कं । 21. C को° । 22. This reading is quite clear in all MSS. Indian Culture, VIII, p. 38, n. 17 suggests त्रियम्बकं and त्र्यम्बकेशं । 23. D °रं । 24. BCN कपाटश्वा° । 25. D °थमू° । 26. B °ग ।

कोंकणात् पश्चिमं तीर्त्वा[1] समुद्रप्रान्तगोचरः ।
हिंगुलाजान्तका[2] देवि जन्तवो जनलेशतः[3] ॥ २७ ॥
सौराष्ट्रदेशो देवेशि नाम्ना तु[4] गुर्जराभिधः ।
श्रीशैलं तु समारभ्य चोलेशान्मध्यभागतः ॥ २८ ॥
तैलंगदेशो देवेशि ध्यानाध्ययनतत्परः ।
मूकाम्बिकां[5] समारभ्य मलयाद्रय[6]न्तगं शिवे ॥ २९ ॥
मलयाला[7]भिधो देशो मंत्रसिद्धिप्रवर्तकः ।
रामनाथं समारभ्य श्रीरंगान्तं[8] बिलेश्वरि[9] ॥ ३० ॥
कर्णाटदेशो देवेशि साम्राज्यभोगदायकः ।
ताम्रपर्णीं समारभ्य[10] शैलाद्धांतपुरतोऽर्द्धतः[11] ॥ ३१ ॥
अवंतीसंज्ञको देशः कालिका तत्र तिष्ठति ।
भद्रकाली महत्पूर्वं रामदुर्गाच्च पश्चिमे ॥ ३२ ॥
श्रीविदर्भाभिधो देशो[12] वैदर्भास्तत्र तिष्ठति ।
गुर्जरात्पूर्वभागे तु द्वारकातो हि दक्षिणे ॥ ३३ ॥
मरुदेशो महेशानि उष्ट्रोत्पत्तिपरायणः ।
श्रीकोंक[13]णादधोभागे तापीतः पश्चिमोत्तरे[14] ॥ ३४ ॥
आभीरदेशो देवेशि विन्ध्यशैले[15] व्यवस्थितः ।
अवंतीतः पूर्वभागे गोदावर्यास्तथोत्तरे ॥ ३५ ॥
मालवाख्यो महादेशो धनधान्यपरायणः ।
द्रविडतैलंगयोर्मध्ये चोलदेशः प्रकीर्त्तितः ॥ ३६ ॥
लम्बकर्णाश्च ते प्रोक्ता भेदो ह्यवान्तरो[16] भवेत् ।
कुरुक्षेत्रात्पश्चिमे तु तथा चोत्तरभागतः ॥ ३७ ॥
इन्द्रप्रस्थान्म[17]हेशानि दशत्रियोजनोत्तरम्[18] ।
पांचाल[19]देशो देवेशि सौदर्य[20]गर्वभूषितः ॥ ३८ ॥
पां[21]चालदेशमा[22]रभ्य म्लेच्छाद्दक्षिणपूर्वतः ।
काम्बोजदेशो देवेशि वाजिराशिपरायणः ॥ ३९ ॥
वैदर्भदेशादूर्ध्वं च इन्द्रप्रस्थाच्च दक्षिणे ।
मरुदेशात्[23] पूर्वभागे वैराड्[24]देशः प्र[25]कीर्तितः ॥ ४० ॥

---

1. D °र्णा । 2. B °तकं । 3. DN जन्तुयोजनलेशतः । A restoration here is suggested in Indian Culture Vol. VIII, p. 39, line 4. 4. D तस्मात्तु । 5. D स्वकात्मिकां । 6. B °पाण्ड्य°, CN °याद्य° । 7. B मलाद्याला°; N मलयाता° । 8. B °गोत्तं । 9. CN °री । 10. B °साद्य । 11. B °र्द्धपूत्तरोर्द्धतः । 12. C देवि । 13. B कोरु° । 14. CN °मे वरं । 15. C °ल° । 16. D परान्तरे । 17. C °स्थो म° । 18. BC °नाह्वये; D °नद्वये । 19. B °ल्य° । 20. B °र्यं । 21. N पं° । 22. N °शादा° । 23. B ° देशा. । 24. B °ट्° । 25. D विराटः परि° ।

काम्बोजाद्दक्ष[1]भागे तु इन्द्रप्रस्था[2]च्च पश्चिमे ।
पाण्ड्य[3]देशो महेशानि महाशूरत्व[4]कारकः ॥ ४१ ॥
गण्डकीतीरमारभ्य चम्पारण्या[5]न्तकं शिवे ।
विदेहभूः समाख्याता तैरभुक्त्यभिधः स तु ॥ ४२ ॥
काम्बोजदेशमारभ्य महाम्लेच्छात्तु पूर्वके ।
वाल्ही[6]कदेशो देवेशि अश्वोत्पत्तिपरायणः ॥ ४३ ॥
तप्तकुण्डं समारभ्य रामक्षेत्रान्तकं शिवे ।
किरातदेशो देवेशि विन्ध्यशैले च तिष्ठति ॥ ४४ ॥
करतोयां समारभ्य[7] हिंगुलाजान्त[8]कं शिवे ।
बक्तान[9]देशो देवेशि महाम्लेच्छपरायणः ॥ ४५ ॥
हिंगुपीठं समारभ्य मक्के[10]शांतं महेश्वरि ।
खुरासनाभिधो देशो म्लेच्छमार्गपरायणः ॥ ४६ ॥
तन्मध्ये चोत्तरे देवि ऐराकः परिकीर्तितः ।
काश्मीरं तु समारभ्य कामरूपाच्च पश्चिमे ॥ ४७ ॥
भोटांतदेशो देवेशि[11] मानसेशाच्च दक्षिणे ।
मानसेशाद्दक्षपूर्वे चीनदेशः प्रकीर्तितः ॥ ४८ ॥
कैलासगिरि[12]मारभ्य सरयूयोनितः परे ।
आमोंगांतं[13] महेशानि महाचीनाभिधो[14] भवेत् ॥ ४९ ॥
जटेश्वरं समारभ्य योगिन्यन्तं महेश्वरि ।
नेपाल[15]देशो देवेशि शिलहट्टं[16] शृणु प्रिये ॥ ५० ॥
गणेश्वरं समारभ्य महोदध्यंतगं शिवे ।
शिलहट्टा[17]भिधो देशः पर्वते तिष्ठति प्रिये ॥ ५१ ॥
वगदेशं समारभ्य भुवनेशांतगं शिवे[18] ।
गौडदेशः समाख्यातः सर्वविद्याविशारदः ॥ ५२ ॥
गोकर्णेशात्पूर्वभागे आर्या[19]वर्तात्तु चोत्तरे ।
तै[20]रभू[21]क्तात्पश्चिमे तु महापुर्याश्च[22] पूर्वतः[23] ॥ ५३ ॥
महाकोशलदेशः स्यात्[24] सूर्यवंशपरायणः ।
व्यासेश्वरं[25] समारभ्य तप्तकुण्डान्तकं[26] शिवे ॥ ५४ ॥

---

1. B °जदक्ष° । 2. B °देशा° । 3. B याम्य° । 4. D °सुरत° । 5. D °वत्या° । 6. B °ही° । 7. B °साद्य । 8. B °न° । 9. B वक्रान°, C वक्रान्त° । 10. B °त्के° । 11. D °बालाभिधो देशो । 12. DN °नीरं, C तीर° । 13. BN आमोरंगान्तं, D आमरागान्तं । 14. D °धिपो । 15. D सोपान° । 16. B °दं । 17. शैलदा° । 18. CN °न्तं महेश्वरि । 19. N °र्य° । 20. B तौ°, N तं° । 21. B °भु° । 22. B °व्याश्च । 23. BD सर्वतः । 24. B °श्च । 25. The reading in all MSS is clear. Read as क.लेश्वरं in Indian Culture, VIII, p. 42, line 9. 26. B °गं ।

मगधाख्यो महादेशो यात्रायां न हि दुष्यति ।
दक्षोत्तरक्रमेणैव क्रमात्[1] कीकट[2]मागधौ ॥ ५५ ॥
चरणाद्रि[3] समारभ्य गृध्रकूटांतकं[4] शिवे ।
तावत्कीकटदेशः स्यात्तदुत्तरो मागधो मतः[5] ॥ ५६ ॥
ज[6]गन्नाथप्रान्त[7]देशस्त्वौत्कलः परिकीर्तितः ।
कामगिरिं समारभ्य द्वारकान्तं महेश्वरि ॥ ५७ ॥
श्रीकुन्त[8]लाभिधो देशो हू[9]णं शृणु महेश्वरि ।
कामगिरेर्दक्षभागे मरुदे[10]शात्तथोत्तरे ॥ ५८ ॥
हू[11]णदेशः समाख्यातः शूरास्तत्र वसन्ति हि[12] ।
अथ घट्टं स[13]मारभ्य कोटीशस्य च मध्यगः ॥ ५९ ॥
समुद्रप्रान्तदेशो हि कोङ्कणः परिकीर्त्तितः ।
ब्रह्मपुत्रात्कामरूपान्मध्यभागे तु कैकयः ॥ ६० ॥
म[14]गधाद्दक्षभागे तु विन्ध्यात्पश्चिमतः शिवे ।
शौरसेनाभिधो देशः सूर्यवंशप्रकाशकः ॥ ६१ ॥
हस्तिनापुरमारभ्य कुरुक्षेत्राच्च दक्षिणे ।
पा[15]ञ्चालात्पू[16]र्वभागे तु कुरुदेशः प्रकीर्त्तितः ॥ ६२ ॥
मरुदे[17]शात्पूर्वभागे कामाद्रेर्दक्षिणे शिवे ।
सिंहलाख्यो महादेशः सर्वदेशोत्तमोत्तमः ॥ ६३ ॥
शिलहट्टात्पूर्वभागे कामरूपात्तथोत्तरे ।
पुलिन्द[18]देशो देवेशि नरनारायणः परः ॥ ६४ ॥
गणेश्वरात्पूर्वभागे समुद्रादुत्तरे शिवे ।
कच्छदेशः समाख्यातः सेवनं[19] शृणु सादरम् ॥ ६५ ॥
पुलिन्दा[20]दुत्तरे भागे कच्छाच्च पश्चिमे शिवे ।
मत्स्यदेशः समाख्यातो मत्स्य[21]बाहुल्यकारकः ॥ ६६ ॥
वैराटपांड्ययोर्मध्ये पूर्वदक्षक्रमेण च ।
मद्रदेशः समाख्यातो माद्रीश[22]स्तत्र[23] तिष्ठति ॥ ६७ ॥
शू[24]रसेनात्पूर्वभागे कण्ठ[25]कात्पश्चिमे वरे ।
सौवीरदेशो देवेशि सर्वदेशाध[26]मोधमः[27] ॥ ६८ ॥

---

1. C मान्°; D °रमात् । 2. C मागधीकट° । 3. B °रिं । 4. D °गं । 5. D द्वन्द्वं तं मागधे स्थित. । 6. प्राग्ज° । 7. DN प्रोक्त° । 8. D °कुण्ड° । 9. B द्रूणं । 10. B °द्दे° । 11. B द्रू° । 12. B च । 13. C थाद्यदश°; D थेत्येंद स° । 14. B मा° । 15. प° । 16. D °लपू° । 17. B °द्दे° 18. D पुरन्ध्र°; CN पुलेन्ध्र° । 19. N सैवतं । 20. N °रन्ध्रा । 21. B पुंस्त्व° । 22. B त्वा । 23. B °त्तत्र; D त्वास्तेऽत्र । The reading माद्रीशाः is suggested in Indian Culture, VIII, p. 43, line 17. 24. N सू° । 25. D °ण्ट° । 26. B °शोत्त । 27. B देशोत्तमोत्तम. ।

अवंतीतः पश्चिमे तु वैदर्भाद्दक्षिणोत्तरे ।
लाट[1]देशः समाख्यातो बर्बरं शृणु पार्वति ॥ ६९ ॥
मायापुरं समारभ्य सप्तशृंगा[2]त्तथोत्तरे ।
बर्बराख्यो महादेशः सैन्धवं शृणु सादरम् ॥ ७० ॥
लंकाप्रदेशमारभ्य मक्का[3]न्तं परमेश्वरि ।
सैंधवाख्यो महादेशः पर्वते तिष्ठति प्रिये ॥ ७१ ॥
एते षटपञ्चाशद्देशा[4] मया प्रोक्तास्तव प्रिये[5] ।
एतन्मध्येऽपि देवेशि देशभेदास्त्वनेकशः ॥
कोटिशः सन्ति देवेशि एते मुख्याः प्रकीर्तिताः[6] ।
रहस्यातिरहस्य च गोप्तव्य पशुसङ्कटे[7] ।
इति संक्षेपतः प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ॥

इति श्रीशक्तिसङ्गममहातन्त्रराजे उत्तरभागे तृतीयखण्डे श्रीमदक्षोभ्यमहोग्रतारासंवादे देशव्यवस्थानियमो नाम सप्तमः पटलः ।

1. B °व° । 2. C °गो° । 3. C पक्षा° । 4. C °शं; N शात् । 5. BCN °क्ताद्य भक्तितः । 6. C °स्तु साम्प्रतं । 7. B °कण्टके ।

## अष्टमः पटलः ।

**श्रीदेव्युवाच ।**

देवेश श्रोतुमिच्छामि पञ्च प्रस्थानि[1] साम्प्रतम् ।

**श्रीशिव उवाच ।**

इन्द्रप्रस्थं यमप्रस्थं व[2]रुणप्रस्थमेव च ॥ १ ॥
कूर्मप्रस्थं महादेवि[3] देवप्रस्थञ्च पञ्चमम् ।
इन्द्रप्रस्थं महेशानि [4]शृणु वक्ष्ये यथाक्रमम् ॥ २ ॥
इन्द्रप्रस्थ महेशानि योगिनीकोटिसंयुतम् ।
मथुरागोकुलं पूर्व[5]भागे तस्य प्रकीर्त्तितम्[6] ॥ ३ ॥
वृन्दावनं कोणदेशे हस्तिनापुरमुत्तरे ।
द्वारका पश्चिमायां तु[8] गदावर्त्तस्तु दक्षिणे ॥ ४ ॥
इन्द्रप्रस्थमध्यभागे कालिकामुखगोचरम् ।
वाराहीक्षेत्रमुद्दिष्टमिन्द्रप्रस्थं तदुच्यते ॥ ५ ॥
सिंहासनं चाश्वपतेस्तदेव परिकीर्त्तितम् ।
यमप्रस्थं महेशानि दक्षिणस्यां व्यवस्थितम् ॥ ६ ॥
सोमेश्वरः[9] पश्चिमायां सप्तशृङ्गी तु पूर्वगा ।
मायापुरं वामभागे व्य[10]ङ्कटेशस्तु दक्षिणे ॥ ७ ॥
यमप्रस्थं भवेन्मध्ये कमलामुखगोचरम् ।
शङ्खावर्त्तो भवेत्तत्र क्षेत्रं मायाभिधं भवेत् ॥ ८ ॥
सिंहासनं नरपतेस्तद्क्षे परिकीर्त्तितम् ।
ततः पूर्वे जगन्नाथः प्राप्ते[11] कविपतिर्भवेत् ॥ ९ ॥
वारुणाख्यं तथा देवि कथ्यते शृणु साम्प्रतम् ।
मक्केश्वरः पश्चिमायामुत्तरे हिङ्गुला भवेत् ॥ १० ॥
त्रैलोक्यविजया देवि दक्ष[12]भागे प्रकीर्त्तिता ।
राजावर्त्त[13]स्तत्र भवेत् शीता[14]मुखगतं च तत् ॥ ११ ॥
तदन्ते[15] सागराः सप्त समुद्राश्च तदन्तके[16] ।
तावत् श्रीवा[17]रुणाख्यं तु प्रस्थं प्रोक्त मया तव ॥ १२ ॥
कूर्मप्रस्थं महेशानि कथ्यते शृणु पार्वति[18] ।
गोकर्णेशाद्दक्ष[19]भागे कामाख्यात्पूर्वगोचरः[20] ॥ १३ ॥

---

1. B °न° । 2. N वा° । 3. N °व । 4. C omits शृणु......महेशानि in the second line. 5. B °र्व । 6. D व्यवस्थितं । 7. B omits two lines. 8. D च । 9. BCN मोरेश्वरः । 10. CN वैं°; B °वे° । 11. BN प्रान्ते । 12. N °क्षे । 13. C सज्जावती । 14. C °ला° । 15. C नन्दने । 16. C सप्तमुद्राश्च तदनन्तके । 17. CN °र्वा° । 18. B साम्प्रतम् । 19. B °शोत्तरे° । 20. B °रा ।

उत्तरे मानसेशः स्यात् पश्चिमे सारदा भवेत् ।
त्रिगुणावर्तमे[1]तद्धि वज्रेश्या[2] मुखमीरितम् ॥ १४ ॥
षट्पंचकोटिचामुण्डागणैर्व्याप्तं तु तद्भवेत् ।
[3]देवप्रस्थं महेशानि कथ्यते शृणु साम्प्रतम् ॥ १५ ॥
श्रीरंगो[4] दक्षिणे प्रोक्तो गायत्री पश्चिमे भवेत् ।
पूर्वे चैव[5] जगन्नाथस्तूत्तरेऽमरकण्टकम् ॥ १६ ॥
कांचीपुरं मध्यभागे मोहनावर्तमेव च ।
ललिताया मुखं तच्च विद्यागणविभूषितम् ॥ १७ ॥
कामाख्याक्षेत्रमुद्दिष्टं महामन्त्रविभूषितम् ।
नवलक्षमहाविद्यासगणैः परिभूषित[6] ॥ १८ ॥
पंच प्रस्थानि देवेशि कथितानि मया तव ।
कृष्णमुद्रणरामश्च[7] श्रीविष्णुर्वरदे[8]श्वरः ॥ १९ ॥
ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः ।
परादि[9]तदतीतान्तं तृत[10]ये परिवर्तते ॥ २० ॥
विष्णोर्भेदाः[11] स्मृता ह्येते नाविष्णुः पृथिवीपतिः ।
पंचप्रस्थेश्वरो भूया[12]त्कालीतारापरायणः ॥ २१ ॥
रहस्यातिरहस्यं च कथितं परमेश्वरि ।
गोपनीयं गोपनीयं गोपनीयं स्वयोनिवत् ।
इति संक्षेपतः प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ॥ २२ ॥

इति श्रीशक्तिसङ्गमहातन्त्रराजे उत्तरभागे तृतीयखण्डे श्रीमदक्षोभ्यतारासंवादे
पंचप्रस्थकथनं नामाष्टमः पटलः ।

---

1. B °ते । 2. B वेज्रेश्या; C वर्तेशो, D राजस्याः । 3. D omits two lines.
4. B °गौ । 5. B °त्र । 6. D 3 °ताः । 7. C °माषाश्च । 8. D °र्वंदरे । 9. C °नि ।
10. D °ती° । 11. B विष्णुमार्गें । 12. B °पा°; C °पः; D °त्वा ।

## नवमः पटलः ।

**श्रीदेव्युवाच ।**

देवेश श्रोतुमिच्छामि पूर्वमुक्तं रहस्यकम् ।

**श्रीशिव उवाच ।**

रहस्यातिरहस्यं च कथ्यते तव भक्तितः ॥ १ ॥
आनंदभुवनं नाम महायोग[1]वनं शृणु ।
शक्तिमानीय देवेशि तस्याः संदीक्षणं चरेत् ॥ २ ॥
दीक्षितां च सुशीलां च मंत्रयंत्रपरायणाम् ।
राजपत्नी देव[2]पत्नीं देवतां गुरुरूपिणीम्[3] ॥ ३ ॥
राजवेश्यां ब्रह्मवेश्यां दिव्यवेश्यां कलापराम् ।
तीर्थवेश्या गुप्तवेश्यां नृत्यवेश्यां च वा प्रिये ॥ ४ ॥
समानीय दिवारात्रौ यथायोगेन पार्वति ।
संदीक्ष्य यत्नतो[4] देवि त्रैलोक्यरञ्जि[5]नी कलाम् ॥ ५ ॥
प्रसूनमंचे संस्थाप्य पाद्यार्घ्याचमनीयकम् ।
दत्त्वा संपूज्य यत्नेन चतुःषष्ठ्युपचारकः ॥ ६ ॥
शृंगाररत्नाभरणैर्नाना दिव्यै[6]र्महेश्वरि ।
स्वेष्टदेवीं च संचित्य पूजयेत् त्रिजटेश्वरीम् ॥ ७ ॥
मंत्रभेदे स्वल्पमंत्रे[7] आवृत्तिर्भूयसी यदा ।
बिन्दोश्च[8] परितः कोणे[9] पूजयेत् तां च देवताम् ॥ ८ ॥
सांगां सावरणां पूज्य यथाकामवरप्रदाम् ।
तां विलोक्य जपेद्देवि सर्वकालमतंद्रितः ॥ ९ ॥
तस्यां तु देवताबुध्या देवीं चिन्त्य महोत्सवैः ।
तत्पादौ[10] चित्य देवेशि जपेद्यत्नेन पार्वति ॥ १० ॥
सर्वसिद्धीश्वरो भूयान्नात्र कार्या विचारणा ।
तस्यां तु देवं[11] संपूज्य शक्त्यालोकनतत्परः ॥ ११ ॥
पूजये[12]त्परमेशानि त्रैलोक्यविजयी कविः ।
तस्या मुखं तु संचिन्त्य देवीबुध्या दिवा[13] शिवे ॥ १२ ॥
त्रिसहस्रं जपेन्मासं त्रिकालज्ञो नरो भवेत् ।
तस्याः कूट[14]मिदं[15] ज्ञात्वा जपेल्लक्षं दिवा शिवे[16] ॥ १३ ॥

---

1. B °मार्गें। 2. D °वेद°। 3. C °णौ। 4. D पतितो। 5. B °ज°; D मोहि।° ०. D °द्रव्यै° । 7. N °यन्त्रे; D °तन्त्रे। 8. B °न्दौ च। 9. D पतितः कोणैः। 10. B °त्पादौ; D °स्यादौ° । 11. B दिवा देवी च। 12. BD प्रजपे°। 13. B देवीं ध्यायेद्दिवा। 14. D कुट्ट°। 15. C कुटुम्बिनं। 16. D °विशं।

तस्याः मोदायितं[1] दृष्ट्वा दिवा पंचायुतं[2] जपेत् ।
पंचकामसमो[3] भूयान्नात्र कार्या विचारणा ॥ १४ ॥
कञ्चुकं तस्याः[4] संवीक्ष्य दिवा लक्षद्वयं जपेत् ।
सर्वसिद्धीश्वरो भूयान्नात्र कार्या विचारणा ॥ १५ ॥
लतायाश्चकितं दृष्ट्वा दिवा जप्त्वा[5] दिवाकरः ।
दिवापश्यञ्जपेत्तारां[6] विकाररहितः शिवे ॥ १६ ॥
सर्वसिद्धीश्वरो भूयात्कालीतुल्यो नरो भवेत् ।
दिवा हास्यरतां[7] वीक्ष्य योगिनीमेलनं लभेत् ॥ १७ ॥
लतां * * दिवा कृत्वा त्रिलक्षात् त्रिगुणेश्वरः ।
दिवा * * तु संवीक्ष्य देवताध्यानतत्परः ॥ १८ ॥
मासत्रय[8]प्रयोगेण देवतां पश्यति ध्रुवम् ।
दिवा * * * मासाद्य समालिंग्य महेश्वरि ॥ १९ ॥
प्रजपेत्[9] सार्धलक्षं च शिवशक्तिसमो भवेत् ।
दिवा तां[10] * * * तु कृत्वा लक्षान्महीपतिः ॥ २० ॥
दिवा चार्द्रां[11] लतां वीक्ष्य चंद्रकोटिसमं जपेत् ।
दिवा सौरीं च संवीक्ष्य त्रिलक्षाच्च त्रि[12]शक्तिधृक् ॥ २१ ॥
लताग्रंथीं[13]श्च संवीक्ष्य दिवा जपति भूपतिः ।
स्थायीभावगतां[14] वीक्ष्य जपेल्लक्षमनन्यधीः ॥ २२ ॥
त्रिलक्षजपतो नूनं राजराजसमो[15] भवेत् ।
लतां पुष्पवतीं दृष्ट्वा दिवा जपति सुंदरी ॥ २३ ॥
लतां कामगतां वीक्ष्य दिवा जपति शंकरः ।
लतामंडलगो भूत्वा देवताध्यानतत्परः ॥ २४ ॥
दिवारात्रं जपेद्देवि[16] भुवनेशीसमो भवेत् ।
लतां गानरतां दृष्ट्वा ताम्बूलदानमाचरेत् ॥ २५ ॥
तांबूलरागं संवीक्ष्य लक्षं जपति नित्यशः[17] ।
दिवा नित्यं[18] जपेत्काली शिव एव न संशयः ॥ २६ ॥
लताताम्बूलवीटी तु गृहीत्वा भक्ष्य संजपेत् ।
स्व[19]रोद्युक्तां तत्र देवि देवतावरमाप्नुयात् ॥ २७ ॥
शय्याभंगीलताहस्ताद्दिवा कृत्वा तु * * ।
गंधर्ववेशमासाद्य सर्वसिद्धिं स विंदति ॥ २८ ॥

---

1. N °पितं, D°र्पितं । 2. B°जं । 3. D °मयो । 4. D कुचौ तस्याश्च; B कुचौ तु तस्याः । 5. N °प्यात्, D °प्य । 6. N जयेक्षाणं । 7. CN °वृतां, D °वृतं । 8. B °मास° । 9. CN पूजयेत् । 10. D देवतां । 11. B चान्द्रां, C चान्द्री, D रात्री । 12. D °तश्री° । 13. D देवी । 14. B °वागनां, D °भाव्यागतां । 15. C °राजेश्वरो, D महाराजसमो । 16. B देवि जपेत्; C जपन् देवि । 17. B °स्पृहा । 18. B वादिमत्यं, N वादिभित्यं । 19. CDN व° ।

अष्टमीसन्धिवेलायामष्टोत्तरलतागृ[1]हम् ।
व्रजन्दिवा जपेन्नित्यं दिनमात्रं[2]महेश्वरि ॥ २९ ॥
प्रत्यष्टम्यां चरन्नेवं सर्वसिद्धीश्वरो भवेत् ।
अमाचतुर्दशीसन्धौ लतात्रिशतकान्वितः ॥ ३० ॥
पुष्पं प्रत्येकं दत्त्वा तु चीनवेषपरायणः ।
दिवा जपेन्महेशानि यावदन्या[3] चतुर्दशी ॥ ३१ ॥
तावज्जपेन्निरातंकः सर्वसिद्धिसमन्वितः ।
नीलवेशं समासाद्य * * पूजनं[4] चरेत् ॥ ३२ ॥
त्रिमासं कुरुते यस्तु सुरतेशी स वै लभेत् ।
तां लतां भोगसामग्रीसमुद्युक्तां च वीक्ष्य च ॥ ३३ ॥
त्रिदिनं च दिवारात्रि[5] जपात्सिद्धीश्वरो भवेत् ।
ता नाट्यस्यां च संवीक्ष्य देवताध्यानतत्परः ॥ ३४ ॥
रात्रौ दिवा जपेद्देवी[6] त्रैलोक्यकविता लभेत् ।
ता वीणावाद्य[7]निरतां वीक्ष्य देवीं दिवा जपेत् ॥ ३५ ॥
राजराजसमो भूयान्नात्र कार्या विचारणा ।
मृदङ्गवादनरतां लतां वीक्ष्य दिवा जपेत् ॥ ३६ ॥
देवतां वरदां मासपंचकैः पश्यति ध्रुवम् ।
डिंडीरवगतां वीक्ष्य लता दिनगतं जपेत् ॥ ३७ ॥
सर्वसिद्धीश्वरो भूत्वा त्रैलोक्यविजयी ह[8]रः ।
लतां नाट्यगतां वीक्ष्य अहोरात्रं जपेच्छिवे ॥ ३८ ॥
तारारूपो नरो भूयान्नात्र कार्या विचारणा ।
मुक्तकेशीं लता दृष्ट्वा दिवा लक्षद्वयं जपेत् ॥ ३९ ॥
कालीतारासमो[9] भूत्वा छिन्नासिद्धि स[10] विन्दति ।
रहस्यातिरहस्यं च तव प्रीत्या च कीर्तितम्[11] ॥ ४० ॥
[12]आनंदयोगो देवेशि तव प्रीत्या मयेरितः ।
इति संक्षेपतः प्रोक्तं विशेषादि[13]वसे शुभः ॥ ४१ ॥

इति श्रीशक्तिसङ्गममहातन्त्रराजे उत्तरभागे तृतीयखण्डे श्रीमदक्षोभ्यमहोग्रतारासंवादे लतासाधनकथनं नाम नवमः पटलः ।

1. B °प्र° । 2. N °नं । 3. B °देत्या । 4. B °वं । 5. N °त्रं, CD °त्रौ ।
6. D °वि । 7. B विद्या°, D लीलावाक्य° । 8. B व° । 9. D °मयो । 10. D प्र° ।
11. N व्यपेहितं; CD मयेरितं । 12. C omits this line. 13. CN °षं दि° ।

## दशमः पटलः।

**श्रीदेव्युवाच।**

देवेश श्रोतुमिच्छामि सूचितस्य विनिर्णयम्।

**श्रीशिव उवाच।**

शक्तिसंगमतंत्रादौ मेरुस्थाने च सूचितम्॥ १॥
तदेव कथ्यते यत्नात्सावधानमना भव।
सामान्यत्वेन[1] कथितं विशेषं शृणु सादरम्॥ २॥
पौषे माघे[2] भाद्रपदे ज्येष्ठे वा परमेश्वरि।
कृष्णे शुक्लेऽथवा देवि कृष्णपक्षे विशेषतः॥ ३॥
सप्तम्या वा त्रयोदश्यां नवम्यामायुधे तथा।
षष्ठ्याममायां देवेशि धूम्रोदेति नभःस्थले॥ ४॥
पाते[3] भद्रादिने[4] वापि गंडे शूले[5]ऽथवा प्रिये।
भरण्यां कृत्तिकायां च त्वार्द्रायां[6] रौद्रगेऽपि वा॥ ५॥
हस्तचित्रा[7]ऋक्षगतो[8] धूम्रो भूयान्महेश्वरि[9]।
अधिकार[10]विहीनेन यत्कृतं यच्च कारितम्॥ ६॥
तेन योगेन वा देवि महापापवशादथ।
भूमिभारविनाशार्थं धूम्रकेतुर्भविष्यति॥ ७॥
त्रिवर्षं पंचमासैश्च[11] षष्टिनाडीपलानि च।
तत्त्वसंख्यानि देवेशि मध्यधूम्रो भविष्यति॥ ८॥
चतुर्मासोत्तरं देवि शक्र[12]केतुर्भविष्यति।
अहिकेतुस्ततो भूयात्सर्पाकारो महेश्वरि॥ ९॥
शक्र[13]केतुर्लोष्टू[14]निभो घटकेतुस्तथापरः।
पादुकाकेतुरपरो हसंती[15] संज्ञिकस्ततः॥ १०॥
व्याघ्रपुच्छनिभश्चैव सर्पपुच्छनिभस्ततः।
चिन्हान्येतानि देवेशि संभवंति पदे पदे॥ ११॥
श्रीविद्यामंडपं[16] कुर्यात्तदा शांतिर्भविष्यति।
तस्मात् त्विदं[17] महेशानि गोपनीयं कलौ युगे॥ १२॥
अधमध्यपूर्णभेदाद्भेदबाहुल्यमीरितम्।
एवं भेदेन देवेशि त्रिशतं पंच मेरवः[18]॥ १३॥

---

1. MSS read व्यसाम्यत्वेन or व्यसान्वत्वेन। 2. D मासे। 3. C जातो। 4. N महादिनै। 5. D मू°। 6. C चान्द्रायां। 7. C °त्रात्। 8. D °त्राक्षतो देवि। 9. C °त्मके°। 10. B °रे। 11. D °स्तु। 12. B °त्रु; D °क्ति; C सेतु°। .13. B °त्रु°; D °क्ति°। 14. N °लेष्टि°। 15. D संहती। 16. D °लं। 17. DN °त्मेरु°। 18. D मेषच।

अग्नि[1] मेरुर्महेशानि वि[2]धिः सिद्धिप्रदायका ।
संप्रदायक्रमे[3]णैव कर्तव्यं मेरुसाधनम् ॥ १४ ॥
लोभान्मोहाद्भयाद्दम्भाद्यदि कुर्यान्नराधमः ।
सर्वस्वहरणं कृत्वा नरके पातयाम्यहम् ॥ १५ ॥
घटकेतुर्यदा भूयात् कुटुम्बं तु विनश्यति ।
धूम[4]केतुर्महेशानि स भूपालविनाशकृत्[5] ॥ १६ ॥
धूम्र[6]केतुर्यदा भूयात् तत्कुटुम्बं तु वर्षतः ।
यमालये प्र[7]विष्टं स्यान्नात्र कार्या विचारणा ॥ १७ ॥
वेद[8]बाह्यो यथा देवि सर्वकर्मबहिष्कृतः ।
तथायं द्विजबाह्यः[9] स्यान्नात्र कार्या विचारणा ॥ १८ ॥
कुटुम्बहा भवेत्सोहि[10] प्रायश्चित्तेन[11] शुध्यति ।
तस्य संसर्गमात्रेण राज्यभ्रष्टो भवेद्विभुः ॥ १९ ॥
तस्माद्यत्नेन देवेशि प्रायश्चित्तं तु कारयेत् ।
शुद्धो भूयात्ततो देवि नान्यथा नारकी ध्रुवम्[12] ॥ २० ॥
श्रीमेरुरश्मिविज्ञानात् त्रैलोक्यविजयी भवेत् ।
अज्ञानात्परमेशानि यः करोति नराधमः ॥ २१ ॥
स पापिष्ठो दुराचारी दुःखभागी भवेद्ध्रुवम् ।
प्राजापत्यशतं कृत्वा[13] गोदानान्तं तु[14] विंशतिः ॥ २२ ॥
सहस्रं भोजयेद्विप्रान् शुद्धो भवति नान्यथा ।
अन्यथा देवदेवेशि संहर्ता परमेश्वरः[15] ॥ २३ ॥
प्रत्यङ्गिरा स्वयं शास्ता हेलया ह्याद्य[16]नायिका ।
ब्रह्मास्त्रमपि देवेशि तत्संहाराय निश्चितम् ॥ २४ ॥
सप्तवर्षै[17] रन्ध्रवर्षैः[18] सकेशो नश्यति ध्रुवम् ।
त्रिमासवेदवर्षैस्तु पृथ्वीपालो विनश्यति ॥ २५ ॥
वर्षेण च कलत्रं च पञ्च वर्षेण कन्यकाम् ।
स्वसां तु ऋतु[19]वर्षेण तत्संसर्गात् ऋषिक्रमात् ॥ २६ ॥
दीक्षायुक्तस्तु यः[20] कुर्यात्तत्फलं तु कथं शिवे ।
वक्त्रकोटिसहस्रैस्तु जिव्हाकोटिशतैरपि ॥ २७ ॥
महिमा वर्णितुं शक्तिः कथमत्र[21] कलौ युगे ।
कलौ पापसमाकीर्णे न मेरुसाधनं मतम्[22] ॥ २८ ॥

---

1. D विना°; N आदि° । 2. B नि° । 3. CN °त्रये° । 4. B कुज° । 5. CN मूलनाशकृद्भवेत्, D समूलं तस्य नाशकृत् । 6. CD °म° । 7. B नि° । 8. B देव° । 9. N °वासः । 10. C °वि । 11. C °त्तं । 12. D भवेत् । 13. B कन्या । 14. B न्येक° । 15. N °रि । 16. C °द्र° । 17. B °र्षे । 18. B °र्षे । 19. N पंच°; D धातु° । 20. B °न्तपः । 21. N कथं मनुं; D कथयं च; B सा कथं च । 22. D कृतं ।

न्यासमेरुर्यंत्रमेरुः कर्तव्यः कुत्रचित्प्रिये ।
तामसं कर्म चैतद्धि न कर्तव्यं हितेच्छुना[1] ॥ २९ ॥
गोलो[2]केन समालापाद्गोलोकत्वं[3] यथा भवेत्
अज्ञात[4]द्विजसंलापात्स भवेद्ब्राह्मणाधमः ॥ ३० ॥
गोपनीयं गोपनीयं गोपनीयं निरंतरम् ।
गोपनात्सिद्धिमाप्नोति गोपनात् शिवतां व्रजेत् ॥ ३१ ॥
न देयं परशिष्येभ्यः कृपणायेति[5] सुन्दरि ।
दीक्षाहीना[6]य नो[7] दद्याद्गोपये[8]न्मातृजारवत् ।
इति संक्षेपतः प्रोक्त रहस्यं श्रृणु चापरम् ॥ ३२ ॥

इति श्रीशक्तिसङ्गमहातन्त्रराजे उत्तरभागे तृतीयखण्डे श्रीमदक्षोभ्यमहोग्रतारासंवादे
अज्ञातदुर्नि[9]मित्तं नाम दशमः पटलः ।

---

1. B °च्छया । 2. B गोपाल°; D गोलकेन । 3. N गोलं च; D भोगत्वं; B भोलत्वं ।
4. N °तः; B °तो; C °न° । 5. B याति । 6. D °नो । 7. D यतो; N °नानो ।
8. N देया ह्रोमय° । 9. D अज्ञाततत्त्वनी° ।

## एकादशः पटलः ।

**श्रीदेव्युवाच ।**

भूकम्पादिकमेतद्धि सूचितं तद्व[1]दाधुना ।

**श्रीशिव उवाच ।**

रहस्यमिति विज्ञाय नोक्तं देवि मया तव ॥ १ ॥
इदमेव महेशानि उक्तं कोटि[2]विनायके ।
अष्टादशसहस्रं तु केतुसंख्या[3] [4]प्रकीर्त्तिता ॥ २ ॥
तन्मध्ये[5] तु शतं चाष्टादशसंख्या प्रकीर्त्तिता ।
एतन्मध्ये महेशानि पंचाशत्केतवः शिवे ॥ ३ ॥
सम्मार्जनसमाकारा वृक्षाकारास्तथैव च ।
शिखाकारसमापन्नास्तथा हस्तकसन्निभाः ॥ ४ ॥
तृणा[6]कारास्तथा कम्बु[7]सदृशाः कुटिलाः[8] शिवे ।
वृक्षमात्रसमाकारा [9]घटाकारास्तथा प्रिये ॥ ५ ॥
एकविंशद्दिनं व्याप्य तद्द्वयं वा महेश्वरि ।
मासमात्रं तथा देवि तद्द्वयं परमेश्वरि ॥ ६ ॥
चतुर्दिक्षु भ्रमन्त्येव[10] दिवा वा चोदयो भवेत् ।
चतुःप्रहरयोगेन रात्रौ तूदयमेव च ॥ ७ ॥
एकवारं द्विवारं वा त्रिचतुःपंचवारकम् ।
क्रमकेतुर्महेशानि समुदेति निरन्तरम् ॥ ८ ॥
एकरूपं च वा देवि भिन्नरूपं च वा प्रिये ।
आब्रह्मकल्पपर्यन्तं सर्वरूपेण वर्तते ॥ ९ ॥
देशभंगो भवेदादौ राष्ट्र[11]भंगो द्वितीयके ।
छत्रभंगस्तृतीये स्याच्चतुर्थे सर्वपीडनम् ॥ १० ॥
पंचमे देवदेवेशि सर्वत्र भूतसंगमः ।
त्रित्रिमास[12]क्रमेणैव पंचषड्वर्षयोगतः ॥ ११ ॥
धूम्रकेतुर्यदा भूयात्तदा छत्रं विनश्यति ।
एवं विचार्य यत्नेन[13] शांतिकं च समाचरेत् ॥ १२ ॥
इति संक्षेपतः प्रोक्तो [14]धूम्रकेतुविनिर्णयः ।
दिवा नक्षत्रपात[15]स्तु नक्षत्रदर्शनं तथा ॥ १३ ॥
अहिकेतुस्तथा देवि दिवा चोल्काप्र[16]दर्शनम् ।
पौर्णिमायां नष्ट[17]चन्द्रः कार्तिक्यां तु विशेषतः ॥ १४ ॥

---

1. C तु व° । 2. B °र° । 3. C संख्याचैव । 4. D सु° । 5. B °ते । 6. C स्तना° । 7. B कंज°, D कुंज° । 8. D कोटिशः । 9. C ज° । 10. DN °वं । 11. B °ज्य° । 12. B ° भिर्न्ना° । 13. B देवेशि । 14. DN °क्त । 15. C °योग° । 16. B °म° । 17. B °मष्ट°; N °मथ ।

सप्तविंशतिनक्षत्रयोगे दिङ्मण्डलं तथा ।
मण्डलं पंचभूतानां सप्तर्षीणां समागमे[1] ॥ १९ ॥
अमायां चन्द्रसंदर्शः प्रलयस्य तु कारणम् ।
भकम्पः प्रतिमाहासः[2] तद्वं[3]गस्तु तथैव च ॥ १६ ॥
उल्कापातो दिवा रात्रौ दुश्चिन्हानि महेश्वरि ।
चिन्हान्येतानि दृष्ट्वा तु कारयेत् स्वस्तिवाचनम् ॥ १७ ॥
महोत्पातादिकं भूयान्नात्र कार्या विचारणा ।
छत्रभङ्गो राष्ट्रभङ्गो महामारीभयं तथा ॥ १८ ।
सर्वथा संभवत्येव येन ल[4]क्षणमुच्यते ।
मोरगं तु समासाद्य महाम्लेच्छांतकं शिवे ॥ १९ ॥
प्रोक्तस्त्वश्वपतिर्देवि शृणुष्व गजनायकम् ।
कोंकणांत समासाद्य आग्नेयान्तं महेश्वरि ॥ २० ॥
प्रोक्तो गजपतिर्देवि शृणुष्व नरनायकम् ।
आ पूर्वपश्चिम व्याप्य प्रोक्तो नरपतिः प्रिये[5] ॥ २१ ॥
सर्वेषां लक्षणं देवि कथितं शंभुताण्डवे[6] ।
दिनहोराभिधं चक्रं प्रवक्ष्यामि समासतः ॥ २२ ॥
रहस्यातिरहस्यं च गोप्याद्गोप्यतरं शिवे ।
यस्य विज्ञानमात्रेण त्रैकाल्यगोचरो भवेत् ॥ २३ ॥
मद्भक्तोऽसि महादेवि तस्मात्तत्ते[7] वदाम्यहम् ।
का[8]लकौशलचक्रं च विष्णुकौशलमेव च ॥ २४ ॥
युद्धकौशलचक्रं च रुद्र[9]कौशलकं तथा ।
दिनकौशलचक्रस्य कलां नार्हन्ति[10] षोडशीम् ॥ २९ ॥
दिनकौशलचक्रस्य विज्ञानी[11] शिव एव हि ।
रेखाः पंच समास्फाल्य[12] ततो दण्डाहतास्तथा ॥ २६ ॥
दिक्क्रमः कथितो देवि विदिङ्मार्ग[13]क्रमेण च ।
एवमष्टा[14]गिलं चक्रं[15] मुखं[16] प्राच्यां समाच[17]रेत् ॥ २७ ॥
प्रतीच्यां पादयुग्मं स्याद्वेद[18]हस्ताभिधं ततः ।
गोलवद्भ्रमणा[19]देव तत्तन्नाम्ना मु[20]खं भवेत् ॥ २८ ॥
नित्याः षोडश देवेशि प्रतिरेखागतक्रमात् ।
पंचाशन्मातृकावर्णाः सर्वाङ्गे यदि निश्चि[21]ताः ॥ २९ ॥

1. B °रिभे; N °रिते । 2. N °माद्वासः । 3. C °दं° । 4. N तेतल्ल°; D स्वेतल्ल° । 5. C °र्भवेत् । 6. B adds देव्युवाच । 7. N °त्तेन । 8 D की° । 9. C इन्द्र°; D भद्र° । 10. N °ति । 11. D दैवज्ञः । 12 C °स्थाप्य । 13. B °प्राण° । 14. N °न्य°; B °प्य° । 15. N °क्रे । 16. B मेरुं । 17. D °ह° । 18. D ° देव° । 19. B °लं बहुमने; C °रसने । 20. N सु° । 21. B °त्य°; D संद्दिय° ।

योगिनीनां चतुःषष्ट्यिथा[1]रेखाक्रमेण तु ।
षट्पंचाशद्ग[2]णेशाश्च दीपरेखासमाश्रिताः ॥ ३० ॥
केशवाद्या वैष्णवाश्च[3] कारके[4] परिनिष्ठिताः ।
कारकाणां[5] च सं[6]ख्या वै भुवनाख्या[7] प्रकीर्त्तिता ॥ ३१ ॥
आधिपत्ये महादेवश्रीकण्ठाः परिकीर्त्तिताः ।
चतुर्दशग्रहास्तत्र चराचरविभेदतः ॥ ३२ ॥
चराचरविभेदेन [8]चतुर्धा[9] शशिभास्करौ ।
अष्टाविंशति ऋक्षाणि परिवर्तक्रमेण च[10] ॥ ३३ ॥
चराचरविभागेन तत्र राशि समाचरेत्[11] ।
एवं[12] तार्तीययुग्मे तु नेत्रयुग्मं प्रकीर्त्तितम् ॥ ३४ ॥
पादस्थाने तु सर्वज्ञः त्रिधा भेदः प्रकीर्त्तितः ।
साम्मुख्यं वामदक्षश्च त्रिधा भागः प्रकीर्त्तितः ॥ ३५ ॥
अहोरात्रेण देवेशि ग्रहऋक्षपरिक्रमः ।
द्वे द्वे नाडीमभिव्याप्य सृष्टिसंहरणैः[13] शिवे ॥ ३६ ॥
सृष्टिमार्गेण सूर्यः स्यात्संहृत्या चन्द्र एव च ।
स्थूलक्रमेण सर्वेशे प्रातरारभ्यते[14] रविः ॥ ३७ ॥
सन्ध्यामारभ्य चन्द्रः स्यद्रात्रौ व्यत्यय एव च ।
विंशत्साहस्रकं सप्तशतं षट्त्रिंशदीरिताः[15] ॥ ३८ ॥
दिनकौशलकं व्याप्य परिवर्तक्रमाच्छिवे ।
फलं यच्छन्ति विश्वेशि ममाज्ञापालकाः सदा ॥ ३९ ॥
अन्येषां तु मते देवि सव्यमार्गेण वर्तनम् ।
अथाष्टाद[16]शसिद्धान्त उपाधिः परिकीर्तिता ॥ ४० ॥
क्वचित्कदाचिन्मिलति भाग्ययोगान्न संशयः ।
सूर्योदये तु यो वारः स ग्रहः प्रात[17]रेव तु ॥ ४१ ॥
केरले व्यं[18]कटेशाख्ये[19] सतां मतं[20] मयेरितम् ।

**श्रीदेव्युवाच ।**

देवेश श्रोतुमिच्छामि रहस्यं[21] पूर्वसूचितम् ॥ ४२ ॥

**श्रीशिव उवाच ।**

क्षमापालो भवेद्दासः कविर्मूकस्तथा भवेत् ।
दीनत्वतां धनाधीशो वन्हिः[22] शैत्यत्वतां व्रजेत् ॥ ४३ ॥

---

1. B पथ° । 2. CN °गु° । 3. N °श्च° । 4. C °येत् । 5. B °णं । 6. B ससं° । 7. D °ना च । 8. B omits चतुर्धा......विभागेन in the third line. 9. C तारके । 10. D यत् । 11. BC °वदेत् । 12. DN पूर्वं° । 13. CN °हारणे । 14. CN वै । 15. D षट्त्रिंशदितीरिताः । 16. B °ष्टदि° । 17. B °न्त° । 18. CN वें° । 19. D व्यंगरेखाख्ये । 20. B स तन्मते । 21. B यत्त्वया । 22. B चन्द्रः ।

महेंद्रोऽपि विरूपः स्यान्मेधाग्रहणजं फलम् ।
साम्राज्यमेधादीक्षायाः फलं प्रोक्तं पदान्तकम् ॥ ४४ ॥
नरत्वं दुर्लभं लोके विद्या तत्र सुदुर्लभा ।
विद्यान्या[1]साच्चिन्त[2]नाच्च ब्राह्मणत्वं भवेच्छिवे ॥ ४५ ॥
युगानां तु सहस्र हि तपस्या येन वै कृता ।
महाविद्याक्रमेणैव पंचषोढाक्रमेण च ॥ ४६ ॥
शक्तिन्यासक्रमे[3]णैव नित्यपूजाक्रमेण च ।
एवं तपस्यासंयुक्तः पृथ्वीपतिपदं लभेत् ॥ ४७ ॥
षट्पंचकोटिचामुण्डापंचाशद्गणपैर्युतम् ।
गदावर्तसमाक्रांतं वाराह्यापि वि[4]भूषितम् ॥ ४८ ॥
अष्टोत्तरशतं देवि वाराहीगणसंकुलम् ।
योगिनीनां चतुःषष्टिकुलै संभूषितं[5] पदम् ॥ ४९ ॥
कालिहृदयमध्यस्थमिन्द्रप्रस्थाभिधं पदम् ।
साम्राज्यमेधादीक्षाचैर्भूषितो यो युगे युगे ॥ ५० ॥
तस्य हस्तगत[6] देवि पदं भवति नान्यथा ।
तार्क्ष्य[7]ग्रहे महेशानि साम्रा[8]ज्मेधायुत[9]श्चरेत् ॥ ५१ ॥
मनोरथमयी[10] सिद्धिर्यस्य हस्ते विराजते ।
इच्छासिद्धिस्तथा तारा यस्य राजति सर्वदा ॥ ५२ ॥
काली वा सुन्दरी वापि प्रसन्ना यस्य चास्ति च ।
अंकमंत्रैः पताकाद्यैः काली विन्द्या[11]त्पदादिकैः ॥ ५३ ॥
पूर्वोक्तरक्षकास्तस्य क्षीणश्चेन्नश्य[12]ति ध्रुवम् ।
पूर्वे[13] कृतयुगे देवि देवदैत्यपुरो[14]गमाः ॥ ५४ ॥
आचार्यद्वितयं कृत्वा राज्यभोगं[15] च चक्रतुः ।
भौमाचार्यो गुरुः प्रोक्तो शुक्रो दैत्यगुरुः स्मृतः ॥ ५५ ॥
मृतसंजीविनी विद्या परकायप्रवेशनम् ।
परविद्याकर्षणं च स्वस्त्रां[16]णां शतकं तथा ॥ ५६ ॥
त्रयस्त्रिंशत्कोटिसख्या माया[17] यद्धस्तगाः शिवे ।
तत्प्रीत्या[18] तु महेशानि क्षणमेकं तु याचितः[19] ॥ ५७ ॥
अ[20]स्मिन्क्षणे जायमानाः सर्वे सिद्धा भवन्ति च ।
इति ज्ञात्वा महेशानि क्षणं[21] दत्त मया तदा ॥ ५८ ॥

---

1. D °भ्या° । 2. D कीर्त° । 3. C त्रये° । 4. D परि° । 5. D सहसितं । 6. N °ते । 7. CN तत्रि° । 8. B °ज्ना° । 9. D पुन° । 10. CN °पि । 11. CN विंश°; D विन्ज्ञान° । 12 B मंस्य°; D क्षीणाश्च रक्ष° । 13. N °र्वे । 14. D देवादित्यगुरो° । 15. C °भङ्ग । 16. B ब्रह्मा° । 17. B भार्या । 18. D प्रत्या°; N भ्मित्रा । 19. B स्तपान्वितः; C चिन्तितः । 20. CN य° । 21. D अन्नं ।

तत्काले ये च वै[1] जातास्ते सिद्धाः सिद्धिदायकाः ।
चतुरशीति सिद्धाश्च जातास्तत्कालगोचराः ॥ ५९ ॥
नव नाथास्तथा[2] जाता शु[3]क्रजन्मक्षणे शिवे ।
यस्य जन्मक्षणे देवि जाता ये सिद्धरूपिणः ॥ ६० ॥
प्रत्यक्षरूपिणस्तस्य का कथा परमेश्वरि ।
तस्य निग्रहकर्ता तु भूमौ कोऽस्ति सुरालये ॥ ६१ ॥
नागालये वा देवेज्ये[4] त्रैलोक्यविजयी स तु ।
तस्य निग्रहकर्ता तु न च कोऽप्यस्ति भूतले ॥ ६२ ॥
त्रैलोक्यविजयास्त्रं च यस्य हस्ते विराजते ।
नामपारायणं देवि मंत्रपारायणं तथा ॥ ६३ ॥
खेचरीसंयुतो यो हि स्तम्भकः शशिसूर्ययोः ।
कालानलास्त्र[5]संपन्नस्तस्य निग्रहकारकः ॥६४ ॥

॥ इति शुक्रः ॥

शिवपूजारतः पूर्वं[6] त्रिंशद्वर्षयुगं शिवे ।
प्रत्यहं करवीरेण[7] पूजाकार्या[8] महेश्वरि[9] ॥ ६५ ॥
तदा तुष्टो महादेवस्त्विदं वचनमब्रवीत् ।
निधीनां नवकं दत्तमिन्द्राद्यास्तव पूजकाः ॥ ६६ ॥
कुबेरस्त्वं सुराध्यक्ष मम हारि सदा वस[10] ।
निधिनाथस्य पदवी तदा दत्ता मया शिवे ॥ ६७ ॥
धनदा कमला सौख्यं लक्ष्मीस्तत्र वसेत्सदा ।
नर[11]शास्तास्तथा यक्षा यक्षिण्यः[12] किन्नरीगणाः ॥ ६८ ॥
त[13]व सेवां प्रकुर्वन्ति धनेशस्त्व भव प्रिय ।
एवं तस्य वरो दत्तो मया पूर्वं महेश्वरि ॥ ६९ ॥
तस्य विग्रहकर्ता तु को वा[14] भुवनमध्यगः ।
श्रीक्रोधमण्डलं देवि यस्य हस्ते विराजते ॥ ७० ॥
मंत्रमंडलकं देवि महा[15]मण्डलमेव च ।
विद्यामडलकं वापि पार्षन्मण्डलमेव च ॥ ७१ ॥
षट्शांभवयुतो या हि तस्य निग्रहकारकः ।
महाक्रो[16]धाकुशेनैव धनदा ताडयेच्छिवे ॥ ७२ ॥
धनदा तु कुबेरस्य[17] निधनत्वं करिष्यति ।

॥ इति धनेशः ।

महाकाल्या महेशानि तार्तीये स्थापितस्तु[18] यः[19] ॥ ७३ ॥

1. CN चेत्र । 2. C °थश्चैव । 3. D श° । 4. B °शि । 5. B °स्त्रसंयुत° ।
6. B adds महेश्वरि । 7. B कारणं । 8. C °ले । 9. B omits. 10. B पदावसा । 11. B °व । 12. D °णी । 13. B न° । 14. B °न्यो । 15. B ग्रह° । 16. N °मे° ।
17. N °रः स्यात । 18. D °तं तु । 19. B सः ।

तार्तीयनेत्ररूपस्तु[1] वन्हिरित्य[2]भिधीयते ।
वीरभद्रस्तथा रुद्रः क्रोधः कालान्तके[3]ति च ॥ ७४ ॥
प्रलयाद्रस्तु[4]संहारपर्यायाः कीर्तिता मया ।
यद्यत्कार्यं समायाति तत्तद्रूपेण वर्तते ॥ ७५ ॥
[5]श्रीकाल्याः प्रेर्यमाणस्तु तत्तद्रूपेण वर्तते ।
कालीक्रोधात्समुद्भूतो[6] देवतामुखवाचकः ॥ ७६ ॥
तस्मिन्हुतं च दत्तं च सर्वं भस्म भवि[7]ष्यति ।
स एव बाड[8]वाग्निस्तु तत्तत्कार्यवशाद्भवेत् ॥ ७७ ॥
अग्नि विना महेशानि न देवि न महेश्वरः ।
कीटाद्ब्र[9]ह्माण्डपर्यन्तं वन्हिः सर्वत्र तिष्ठति ॥ ७८ ॥
काली[10]श्मशानसंभूतः काल्या नेत्रे नि[11]योजितः ।
संहारसमये[12] प्राप्ते काल्या संप्रेरितः[13] शिवे[14] ॥ ७९ ॥
ब्रह्माण्डं भस्मसात्कृत्वा ज्वालामालासमाकुलः ।
अनादिसृष्टिरूपाया[15] महामायाद्यचण्डिका ॥ ८० ॥
श्रीमत्सिद्धि[16]कराली या गुह्यकाली तु या परा ।
कालकाली तु या प्रोक्ता महाकाम[17]कला तु या ॥ ८१ ॥
स्वराजदंते देवेशि ब्रह्माण्डं[18] स्थापितं तया ।
अनंतकोटिब्रह्माडं राजदंते विराजते ॥ ८२ ॥
दन्तेषु राजते यस्माद्राजदन्ताविति स्मृतौ ।
त्रैलोक्यचर्वकौ दन्तौ मम कार्यकरावुभौ ॥ ८३ ॥
तेन कारणतो देवि राजदन्तौ प्रकीर्तितौ ।
इच्छाशक्त्या तया[19] देवि सृष्टिरुत्पादिता[20] पुनः ॥ ८४ ॥
तदा वन्हिर्महेशानि स्वनेत्रे स्थापितस्तदा[21] ।
अष्टोत्तरशतं वन्हेः[22] षोडषोत्तरगं[23] रवेः[24] ॥ ८५ ॥
शतं षट्त्रिंश[25]त्सोमस्य नेत्रत्रितयकं शिवे ।
एता एव कला देवि शांभवादौ प्रयोजिताः ॥ ८६ ॥
ईदृग्विधो[26] महेशानि वन्हिरुक्तो मया तव ।
तस्य निग्रहकर्ता च ब्रह्माण्डे कोऽस्ति वै प्रिये ॥ ८७ ॥
नवचक्रोपासको यः षट्चक्रोपासकोऽपि वा ।
साम्राज्यशांभवाक्रान्तः पंचास्त्रसाधने रतः ॥ ८८ ॥

---

1. B °पं तु; D °पांतु । 2. D °विद्या° । 3. B °नले° । 4. D °द्धन्तु° । 5. C omits this line. 6. CN °तो । 7. D करि° । 8. B °दा° । 9. N कोटिब्र° । 10. C °ल° । 11. D °ति; B वि° । 12. N° यं । 13. N °प्रेरितं । 14. C °वः । 15. B °य । 16. CN °द्ध° । 17. D °ल° । 18. B °ण्डे । 19. D °दयो । 20. D °का । 21. B °रां । 22. D बाहुः । 23. B वा; D षोडशं तुरगं । 24. C ° वैः । 25. D त्रिंशच्च । 26. N °धौ ।

इशविद्यामयी या तु तस्योपासनतत्परः ।
दिवारात्रि[1]व्यत्ययं तु यः कर्तुं भवति क्षमः ॥ ८९ ॥
स वन्हेर्निग्रहे शक्तो भवत्येव न चान्यथा ।
॥ इति वन्हिः ॥
षट्त्रिंशत्कोटिदेवानामीश्वरो यस्तु कीर्तितः ॥ ९० ॥
स देवेन्द्र इति ख्यातो महासाम्राज्यदायकः ।
निखर्ववारं देवेशि श्रीविद्योपासिततत्परः ॥ ९१ ॥
ततः शाम्भवसंपन्नो मेधादीक्षायुतस्ततः ।
रश्मिमण्डलसंयुक्तः साम्राज्यमण्डलान्वितः ॥ ९२ ॥
चक्रपारायणासक्तो यत्रपारायणान्वितः ।
कला[2]युग्मसहस्राणा[3] कादिहादिक्रमेण च ॥ ९३ ॥
एतद्युक्ततपस्या तु येन यमयुगं[4] कृता ।
तेनेद[5] प्राप्यते देवि पदमिंद्राभिधं शिवे ॥ ९४ ॥
पचरत्नं समासाद्य वीरसाधनतत्परः ।
तस्य हस्तगतं देवि पदमिन्द्राभिधं भवेत् ॥ ९५ ॥
नवकोटिमहामंत्रैः समाक्रात[6] शिवे पदम्[7] ।
तद्रक्षका महेशानि पचाशत्कोटिभैरवाः ॥ ९६ ॥
क्रोधराज तु शरभस्तथा प्रत्यंगिरा शिवे ।
अनंतकोटि मन्त्रैश्च रक्षितं तत्पद शिवे ॥ ९७ ॥
प्राप्ति[8]स्त्विन्द्रपदस्याद्य[9] नाल्पस्य तपसः फलम् ।
तस्य निग्रहकर्ता तु कोऽस्ति क्वापि[10] चराचरे[11] ॥ ९८ ॥
क्रूरकर्मकरत्वाच्च राक्षसाः परिकीर्तिताः ।
ब्रह्माण्डगोलके या च या काचिज्जगतीतले ॥ ९९ ॥
समस्ताः सिद्धयो देवि यस्य हस्तगताः सदा ।
स एव निग्रहं कर्तुं [12]शक्तो भवति नान्यथा ॥ १०० ॥
[13]अञ्जन[14]खेचरीखड्गवेतालगुटिकास्तथा ।
चन्द्रसूर्यसहस्राणि साधको यः करोति च ॥ १०१ ॥
सुन्दरीकालिकातारा यस्य गेहगताः सदा ।
देवेन्द्रनिग्रहे शक्तिस्तस्य वै भवति ध्रुवम् ॥ १०२ ॥
नराय न[15] प्रकाश्यं[16] स्यात् किमन्यद्बहुजल्पनम् ।
इति संक्षेपतः प्रोक्तं कालिकासिद्धिलक्षणम् ॥ १०३ ॥

---

1. CN °त्रि° । 2. D omits कला° । 3. D °स्रलोशानां । 4. B सत्ययुगे; C यमपुरं; D मम युगं । 5. B °हं । 6. B °ते; D न्तां । 7. D °दे । 8. B °हु° । 9. CN °दं स्थाप्य । 10. B वा तु; C जिह्वा । 11. B राक्षसं । 12. D omits शक्तो......प्रोक्तं in the seventh line. 13. C omits this line. 14. B °जि° । 15. C नारायण° । 16. D शं ।

काादिहादिमतत्वेन प्रोक्तमेतन्मया तव ।
गोपनीयं गोपनीयं स्वयोनिरपरा यथा ॥ १०४ ॥

**श्रीदेव्युवाच ।**

देवेश श्रोतुमिच्छामि जीवक्रीडाविनिर्णयम् ।

**श्रीशिव उवाच ।**

[1]शृणु देवि प्रवक्ष्यामि जीवन्यासविनिर्णयम् ॥ १०५ ॥
जीवन्यासः पञ्चधा स्यात् बी[2]जस्त्रीदक्षसागराः ।
कालानलक्रमेणैव प्रोक्तः पञ्चविधः शिवे ॥ १०६ ॥
गौडकेरलकाश्मीरक्रमभेदेन पार्वति ।
देव[3]देहे च पुत्तल्यां षष्ठी चन्द्रविनिर्णयः[4] ॥ १०७ ॥
[5]गाणपे[6] चैव पुत्तल्यां शिवलिङ्गे[7] च पार्वति ।
पार्थिवाभिधदुर्गाया[8] यथालिङ्गेन योजयेत् ॥ १०८ ॥
काश्मीराख्यक्रमे देवि षष्ठी वन्हि[9]विभूषिता[10] ।
बहुत्वादिक्रमे देवि क्रम एषः प्रकीर्तितः ॥ १०९ ॥
गौडे द्वयं तु साम्यं स्यादित्यागमेषु गोपितम् ।
केरलाख्यक्रमे देवि षष्ठीं चन्द्रेण योजयेत्[11] ॥ ११० ॥
द्वित्रिरुद्रशतान्ते तु ग्रहदोषनिवारणे ।
विंशद्दिनं पूजयेद्धि सर्वग्रहनिवारणम् ॥ १११ ॥
एकविंशति संपूज्य सर्वपापैः प्रमुच्यते ।
शतं सपूजयेन्नित्यं सर्वकामा[12]ल्लभेच्छिवे ॥ ११२ ॥
सहस्रपूजनाद्देवि दुर्भगः सुभ[13]गो भवेत् ।
सहस्रत्रितयं पूज्य सर्वकार्यक्षमो भवेत् ॥ ११३ ॥
एवं लक्षादि संपूज्य सर्वसिद्धीश्वरो भवेत् ।
एकद्वित्रिविधौ[14] देवि कोटिशोऽनंतरूपधृक् ॥ ११४ ॥
शिवः संव्याप्य सर्वं तु[15] सदा तिष्ठति पार्वति ।
शिवस्य प्राणा इत्युक्त्वा पार्थिवे[16] प्राणयोजनम् ॥ ११५ ॥
एकः शिवो महेशानि प्राणास्तु बहवः शिवे ।
शिवस्य प्राणाः सर्वत्र संव्याप्य सन्ति पार्वति ॥ ११६ ॥
पार्थिवेषु शिवः[17]प्राणाः षष्ठी चन्द्रसमाङ्किते[18] ।
काश्मीराख्यक्रमो देवि कथितस्ते मया तव ॥ ११७ ॥

---

1. B omits this line. 2. N °द्रा° । 3. B °वे । 4. D चन्द्रं च सेवनी ।
5. C omits this line. 6. D गाणेशे । 7. B °ङ्गं । 8. B याः । 9. B °ह्नि° ।
10. CN °तः । 11. B °जितं । 12. °वीन् कामान् । 13. C °लभ; श्रुत° । 14. B °धा ।
15. C तद् । 16. B °व° । 17. B °व° । 18. B °ति; C °नि ।

शिवो दाता शिवो भोक्ता शिवः कर्ता निरंजनः ।
भस्मोद्धूलितसर्वाङ्गो रुद्राक्षभूषिताङ्गकः ॥ ११८ ॥
सप्तविंशतिरुद्राक्षाः सन्ध्या[1]वत्परिकीर्तिताः ।
उक्तसंख्या महेशानि स्नानवत्परिकीर्तिताः ॥ ११९ ॥
सहस्रमणयो दे[2]वि नैमित्तिकविधौ शिवे ।
द्वित्रिवेदसहस्राणि रुद्राक्षान्धा[3]रयेत्प्रिये ॥ १२० ॥
रुद्राक्षमण्डलं[4] कृत्वा तूत्तमाधममध्यमः ।
रुद्राक्षभूषितो भूत्वा रुद्रतुल्यः क्षणाद्भवेत् ॥ १२१ ॥
[5]मस्तके त्रिगुणा धार्या द्विगुणा बाहुमण्डले ।
यथेच्छया च सर्वाङ्गे उक्तसंख्या श्रुतौ शिवे ॥ १२२ ॥
रुद्राक्षधारणे[6] देवि विशेषान्नियमद्वयम् ।
स्त्रीद्व[7]ष्टं गुरुग्रस्तं[8] च तत्संसर्गं न[9] कारयेत् ॥ १२३ ॥
नेत्रत्रयात्समुत्पन्ना रुद्राक्षास्त्रिविधाः[10] कलौ ।
धनश्रीर्दक्षनेत्रे स्यात्[11] मो[12]रङ्गोऽन्यस्तु चोत्तरः[13] ॥ १२४ ॥
तृतीयस्तु[14] मलाकी स्यान्नाग्निर्दहति तत्तनु[15]म् ।
रुद्रचक्षुः[16] समाख्याता[17] रुद्राक्षाः परिकीर्तिताः ॥ १२५ ॥
रुद्राक्षमंडपे[18] स्थित्वा यं यं मंत्रं जपेच्छिवे ।
स एव सिद्ध[19]रुपः स्यान्नात्र कार्या विचारणा ॥ १२६ ॥
जीर्णे सूत्रे पुनः सूत्रं[20] कृत्वा स्थाप्य जपेन्मनुम् ।
रुद्राक्षमण्डपे देवि पूजयेत् सिद्धिहेतवे ॥ १२७ ॥
रुद्राक्षमण्डपे देव द्विधा श्रीचक्रपूजनात्[21] ।
श्रीविद्यारूपमाप्नोति नात्र कार्या विचारणा ॥ १२८ ॥
द्विविध[22]त्वं प्रवक्ष्यामि येन देवीमयो भवेत् ।
चत्वारि शिवचक्राणि शक्तिचक्राणि पंच च ॥ १२९ ॥
भूपुरं गुणरेखा च नागयुग्मदलानि च ।
ततो नागदलं देवि शिवचक्राणि पार्वति ॥ १३० ॥
मन्वस्रं दिग्युगास्रं च त्वष्टास्रं च त्रिकोणकम् ।
पंच वै शक्तिचक्राणि दक्षिणामूर्तिसंमते ॥ १३१ ॥
आनंदभैरवमते शक्तिशैवानि संश्रृणु ।
चतुः श्रीकण्ठसंयुक्तैः शिवरामादि पंचभिः ॥ १३२ ॥

---

1. B यथा° । 2. B प्रणयाद्देवि । 3. N सुषुप्ताधा; CD श्रुत्युक्तवान् धा° । 4. B °वं । 5. B omits two lines. 6. D °को । 7. C °द्वे° । 8. C °प्या । 9. C °र्गाश्च । 10. D °क्षास्तु त्रिधा । 11. CD °त्रान्य । 12. C मौ° । 13. C °त्पश्च चाधरः । 14. B °यो तु । 15. N रक्षाहरितनु° । 16. N °विष्णु° । 17. CD दिङ्मुख संख्यानां ( D °तां ) । 18. B °पं । 19. D °द्धि° । 20. B स्यूतं । 21. B °नं । 22. B °धा° ।

परस्परप्र[1]भिन्नाभिः शंभोः प्रकृतिभिर्नव ।
श्रीचक्रसिद्धिमेतद्धि शिवशक्त्यात्मकं महः ॥ १३३ ॥
अंतर्गृहं बहिश्चैव गृहं तु द्विविधं शिवे ।
चतुर्दशारपर्यन्तमन्तर्गृहमिदं[2] शिवे ॥ १३४ ॥
बहिर्गृहं त्वष्टदलाद्भूपुरान्तं प्रकीर्तितम् ।
चतुर्दशारपर्यन्तं श्रीचक्रं परिकीर्तितम् ॥ १३५ ॥
यथा परापूजनादौ बिंदु[3]मध्ये गृहं शिवे ।
तथान्तर्गृहमित्युक्तं सर्वदेवप्रपूजिते ॥ १३६ ॥
रुद्राक्षमण्डपे देवि चक्रद्वयविचारणात् ।
सर्वसिद्धीश्वरो भूयान्नात्र कार्या विचारणा ॥ १३७ ॥
तत्र पीठक्रमं ज्ञात्वा यंत्रे शक्तिं[4] प्रपूजयेत् ।

**श्रीदेव्युवाच ।**

पीठकुम्भं प्रपूज्यं[5] स्यात्तन्मे वद महेश्वर ॥ १३८ ॥
अधो मध्येऽथवा पूज्यं कुत्र वा परमेश्वर ।
अथवो[6]परि पूज्यं वा कुत्र पूजा विधीयताम् ॥ १३९ ॥
तन्मे वद महेशान यद्यहं तव वल्लभा ।

**श्रीशिव उवाच ।**

पीठं तु पात्रमित्युक्तं [7]पीठोपरि प्रपूजयेत् ॥ १४० ॥
यन्त्रं[8] चैतन्यमित्युक्तं पीठं चाधस्तनं भवेत् ।
यंत्राधः पूजये[9]त्पीठं यंत्रं मूर्तिमयं शिवे ॥ १४१ ॥
मुर्ते[10]रधो भवेत्पीठं मूर्तिः पीठोपरि प्रिये ।
यंत्राधः पूजयेत्पीठं यंत्रं मूर्तौ निधापयेत् ॥ १४२ ॥
अत्र केचिदपीच्छन्ति यंत्रमध्ये प्रपूजनम् ।
शुभयोगे शुभदिने महापर्वणि साधकः ॥ १४३ ॥
चन्द्रसूर्यग्रहे वापि यंत्रस्थापनमाचरेत् ।
यन्त्र[11]संस्थापनं कार्यं[12] चंद्रसूर्यग्रहे शिवे ॥ १४४ ॥
तद्यंत्रस्था देवता तु सहसा वरदायिनी ।
चंद्रसूर्यग्रहे[13] देवि यद्यत्कर्म करोति च ॥ १४५ ॥
तत्तदक्षय्यमा[14]याति विद्याराज्ञीप्रसादतः ।
प्रमादान्मोहतो वापि पवित्रारोपणं[15] प्रिये ॥ १४६ ॥

---

1. B °म° । 2. CN °मतं । 3. C चक्र° । 4. B शाक्तं । 5. B°त्वयं । 6. C जप्यगो° । 7. D omits पीठोपरि......°पीठं in the fifth line. 8. B पद्म° । 9. B प्रजपे° । 10. B त्तो° । 11. B पंच° । 12. CN कर्म । 13. C °हा । 14. B °देव सभा° । 15. D °ने ।

अधिवासनकं कर्म न जानन् पूर्वमेव चेत् ।
तदा किंवा महेशानि तत्कार्यं वा विलोपयेत् ॥ १४७ ॥
लोपने[1] चेत् महत्पापं कार्यं यत्नेन शांकरि[2] ।
प्रथमप्रहरे देवि ह्यधिवासनमाचरेत् ॥ १४८ ॥
तृतीयप्रहरे देवि पवित्रारोपणं चरेत् ।
प्रहरद्वयभेदेन ह्यधिवासनमीरितम्[3] ॥ १४९ ॥
कार्यलोपो न कर्तव्यः सर्वथा हितमिच्छता ।
यंत्राधिवासनं कार्य[4]मेवमेव[5] प्रकीर्तितम् ॥ १९० ॥
कर्मलोपे क्रियमाणे देवताशापमाप्नुयात् ।
इति संक्षेपतः प्रोक्तं संप्रदायत्रये शिवे[6] ॥ १९१ ॥
पुरश्चर्या त्रिधा देवि तत्क्रमं शृणु पार्वति ।
दशांगा केरले प्रोक्ता काश्मीरे वसुसंज्ञिता ॥ १९२ ॥
पंचांगा गौडमार्गे तु साम्राज्यमण्डलं शृणु ।
कालिकाशापमुक्तिस्तु[7] महाकालश्च कुलुका[8] ॥ १९३ ॥
[9]तद्गायत्री स्पर्शमणिस्तारा तस्याश्च कुलुका ।
अक्षोभ्यवटुकौ देवि त[10]था चैकाक्षरी[11] शिवे ॥ १९४ ॥
तद्गायत्री तथा बाला तद्गायत्री तथैव च ।
कामविद्यामणिः[12] कीलास्तद्विद्या[13]कुलुका तथा ॥ १९९ ॥
स्वर्णेशः क्षेत्रपालश्च तथैव छिन्नमस्तका ।
एकार्णा तस्या गायत्री ततः कामकला शिवे ॥ १९६ ॥
तद्गायत्री मधुमती तथा पद्मावती शिवे ।
संप[14]त्सरस्वती[15] चैव नवार्णा विजया[16] तथा ॥ १९७ ॥
द्वात्रिंशदक्षरी विद्या त्रैलोक्यविजया तथा[17] ।
हेलका[18] चार्द्रपटि[19]का मृत संजीव[20]नी तथा ॥ १९८ ॥
××स्तंभकरी विद्या तथा[21] कर्णपिशाचिनी ।
अमरी कुण्डली देवि तथा चै[22] कालसुन्दरी ॥ १९९ ॥
कर्णचंडा तथामोघ[23]कर्णाख्या तु पिशाचिनी ।
महाकर्णपिशाची च तथा स्वप्नेश्वरी शिवे ॥ १६० ॥
स्वप्नवाराहिका विद्या द्वितीया महती[24] शिवे ।
श्रीमहारक्तचामुण्डा त्रिपुराकर्ष[25]णी तथा ॥ १६१ ॥

---

1. B °पेन; D °पनात् । 2. B शंकर । 3. N °माचरेत् । 4. CDN कर्म । 5. B ये च । 6. D °द्वये । 7. B °श्च । 8. B कुष्टताः । 9. C omits two lines. 10. C य° । 11. B °रा । 12. B °सनिः । 13. CN द्विविधा । 14. N °व° । 15. C °मिदं; N °लती । 16. C तेन वर्णाधिका । 17. N °त्रयं; D °याश्रया । 18. B °की । 19. N °घटि°; C °पिट° । 20. DN °वि° । 21. D या च । 22. CDN °थैव । 23. B मोटी; C मेघ° । 24. CN °ता । 25. CN °र्षि° ।

[1]चिटिविद्या महेशानी कमलाक्षी ततः परम् ।
आकर्षणी महाकाली श्रीविद्या[2]कर्षिणी तथा ॥ १६२ ॥
वशीकरणकाली च महानीलसरस्वती ।
नकुली बगला विद्या तद्गायत्री च कुल्लुका ॥ १६३ ॥
वसोर्धारा च धूमेशी तथा मारण[3]कालिका[4] ।
त्रैलोक्यमोहिनी चैव श्रीमहाकुलहारिणी ॥ १६४ ॥
सुरतेशी किन्नरी च रंजकी तदनंतरम् ।
वशीकरण[5]ताम्बूला द्वितीयाऽपि तथैव च ॥ १६५ ॥
क्षिप्रकामिनि[6]का विद्या काली[7] कामकला[8] शिवे ।
ताम्बूलाकर्षिणी विद्या द्वितीया मु[9]खमार्जनी[10] ॥ १६६ ॥
श्रीविद्या कुल्लुका चैव दीपि[11]नी च महेश्वरी ।
कालिका दीपि[12]नी चैव महामण्डलमेव च ॥ १६७ ॥
खड्गवार[13]णविद्या च भूतरुद्रमहांकुशा ।
प्रत्यंगिरेति देवेशि साम्राज्यमंडलं मतम् ॥ १६८ ॥
जपपूजा जपश्चैव ध्यानं चैव तथा जपः[14] ।
पुनर्ध्यानं बलि[15]श्चैव नैवेद्यं च विसर्जनम् ॥ १६९ ॥
कुमारीपूजनं होमो बलिदानं च भो[16]जनम् ।
पुनर्जपो[17] महेशानि साम्राज्यमंडलक्रमः ॥ १७० ॥
क्रूरचंडा क्रूरजटा उग्रघंटा तथैव च ।
एते विज्ञाय यत्नेन साधयेत्सिद्धिसाधनम् ॥ १७१ ॥
जपेन पुटिता पूजा पूजया पुटितो जपः ।
अन्योन्यपूज[18]नं कृत्वा साधयेद्वी[19]रसाधनम् ॥ १७२ ॥
पूजायुक्तं जपेन्मंत्रं न मन्त्रं केवलं जपेत् ।
जपयुक्ता भवेत्पूजा न पूजा केवला भवेत् ॥ १७३ ॥
इति संक्षेपतः प्रोक्तं गोपनीयं स्वयोनिवत् ।

**श्रीदेव्युवाच ।**

देव देव महादेव विश्वसिद्धिपरायण ॥ १७४ ॥
चराचरमिदं सर्वं[20] त्वन्मुखाद्विश्रुतं मया ।
इदानीं वद सर्वज्ञ भूतानां निग्रहो महान् ॥ १७५ ॥

**श्रीशिव उवाच ।**

रहस्यातिरहस्यं च कथं तत्प्रवदाम्यहम् ।
तथापि तव संप्रीत्या कथ्यते श्रृणु साम्प्रतम् ॥ १७६ ॥

---

1. D omits two lines 2. CN द्वितीया° । 3. CN वाराही; D मारहा । 4. D कालिका तथा । 5. D °णा । 6. N °मीतिका । 7. C °मी । 8. D कालिकाकमला । 9. N सु° । 10. B °र्जि° । 11. B °प° । 12. B °प° । 13. B °रावण° । 14. N °यः । 15. D जप° । 16. B पू° । 17. N पूजनीयो । 18. D पुट° । 19. N °द्वर° । 20. N सत्त्व ।

भूताः प्रेताः पिशाचाश्च राक्षसा ब्रह्मराक्षसाः ।
भूतप्रेतग्रहाश्चैव तथा बालग्रहाः शिवे ॥ १७७ ॥
कश्मलाश्च निवाताश्च डाकिनी शाकिनी तथा ।
याकिनी राकिनी चैव हाकिनी लाकिनी तथा ॥ १७८ ॥
काकिनी प्रमुखाश्चैव झोटिंगा[1] भैरवेरिताः ।
रुद्रग्रहास्तथा विष्णुग्रहा ब्रह्मग्रहास्तथा ॥ १७९ ॥
कृत्यग्रहास्तथा देवि[2] कूष्माण्डा यक्षिणीग्रहाः ।
कामग्रहा मदो[3]न्मादा स्तथोन्मत्तग्रहाः शिवे ॥ १८० ॥
जलग्रहास्तथा सर्वे[4] ग्रहाश्च कट[5]पूतनाः ।
स्कन्दग्रहा महेशानि तथा वैनायिकाः शिवे ॥ १८१ ॥
धनग्रहास्तथा देवि तथा देवग्रहा अपि ।
यक्षाश्च दानवा दैत्या वेतालाः किन्नरीगणाः ॥ १८२ ॥
भूतिन्यप्सरसश्चैव तथैव नागिनीग्रहाः[6] ।
एवमादिग्रहादीनां नाशनं येन जायते ॥ १८३ ॥
शूलिनी शरभश्चैव शिवपंचाक्षरी तथा ।
नव[7]दुर्गा बहिर्बं[8]धस्तथान्तर्बन्ध एव च ॥ १८४ ॥
सुभ्रूणश्च महेशानि तथैव खड्गवार[9]णः ।
महाविद्यामंडलं च महामंडलमेव च ॥ १८५ ॥
हनुमान्भैरवश्चैव बटुकः क्रोधभैरवः ।
प्रत्यंगिरा वीरभद्रस्त्रैलोक्यविजया तथा ॥ १८६ ॥
नारसिंहो महेशानि महाशरभ[10]शूलिनी[11] ।
चंड[12]काली भद्र[13]काली प्रोक्ता रुद्रमहांकुशा ॥ १८७ ॥
महापाशुपतास्त्रं चाघोरास्त्रं च तथैव च ।
एते मंत्रा मया प्रोक्ता शाबरद्वय[14]योगतः ॥ १८८ ॥
ब्रह्मराक्षसवेतालकृत्यादौ खड्गवारणे[15] ।
ब्रह्मा विष्णुस्तथारुद्रः प्रेता[16]पस्मारनाशने ॥ १८९ ॥
यातुधानविनाशे[17]तु तथा किंपुरुषादिके[18] ।
शरभो[19] हनुमान्देवि विरूपाक्षोङ्गिरा अपि ॥ १९० ॥
भूतप्रेतपिशाचादि क्रूरग्रहनिवारणे ।
शूलिनी नव[20]दुर्गा च तथा पंचांगुलिः[21] प्रिये ॥ १९१ ॥

---

1. D कोटिङ्गाः । 2. B °व । 3. DN °हो° । 4. B °र्वं° । 5. B °श्चेटक° । 6. B °गणाः । 7. CN वन° । 8. N °र्वं° । 9. B °राव° । 10. C भैरव° । 11. N भूतिनी । 12. CD °द्र° । 13. B महा° । 14. D °ग्रह° । 15. B रावणे, N रावणेः । 16. CN प्रत्या° । 17. D °विधाने । 18. B °कं । 19. C स्वरूपो । 20. B वन° । 21. B ली° ।

कूष्माण्डडाकिनीनाशे[1] प्रेतापस्मारनाशने ।
वीरभद्रः शिवः प्रोक्तः सर्वनाशे तु तद्गणाः[2] ॥ १९२ ॥
सर्वेषां नाशने शान्तौ प्रीतावपि महेश्वरि ।
महाविद्यामण्डलं च बन्ध[3]द्वयसमन्वितम् ॥ १९३ ॥
महाविद्यामण्डलेन किं तद्यत्र करे स्थितम् ।
गोपनीयं गोपनीयं गोपनीयं प्रयत्नतः ॥ १९४ ॥
रहस्यातिरहस्यं च स्वयोनिरपरा यथा ।
इति संक्षेपतः प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ॥ १९५ ॥

**श्रीदेव्युवाच ।**

देवेश श्रोतुमिच्छामि रहस्यमपरं[4] वद ।

**श्रीशिव उवाच ।**

आवेशं[5] भैरवादीनां निग्रहो येन जायते[6] ॥ १९६ ॥
तेनैव शक्यते कर्तुं नान्यथा शांकरं वचः ।
तन्मूलविद्यायोगेन किंवा सिध्यति पार्वति ॥ १९७ ॥
नृसिंहानां भैरवाणां तथा हनुमदादिके ।
श्रीवीरवायुपुत्रेण खङ्गवारणतः श[7]मः ॥ १९८ ॥
रक्तप[8]भैरवादीनां शास्ता श्रीभैरवेश्वरः ।
दामिनीनां तथेष्टानां महेष्टाना[9]मपि प्रिये ॥ १९९ ॥
निग्रहे वीरकाली तु किमन्यच्छ्रोतुमिच्छसि ।

**श्रीदेव्युवाच ।**

अथ वै कुल्लुकोत्पत्तिं कथयस्व ममाधुना ॥ २०० ॥

**श्रीशिव उवाच ।**

रहस्यमपि देवेशि[10] कथ्यते श्रृणु साम्प्रतम् ।
कुल्लुका च तथा सेतुर्महासेतुस्तथैव च ॥ २०१ ॥
निर्वाणं कुण्डली षष्ठी[11] सर्वोत्पत्तिं श्रृणु प्रिये ।
विद्यानां कुलपूज्यत्वात्कुल्लुका तेन कीर्तिता ॥ २०२ ॥
विद्यासंबंधिदोषाणां भक्षयित्री यतः शिवे ।
तेनेयं कुल्लुका नाम कालिनित्या तृतीयका ॥ २०३ ॥
कुलैव कुल्लुकानाम्नी नीला नीलसरस्वती ।
विद्यासिद्ध्यर्णवे[12] देवि येन पारं प्रग[13]च्छति ॥ २०४ ॥
तेन सेतुर्महेशानि विद्यामार्गः प्रकीर्तितः ।
महाविद्याप्ति[14]सन्दर्शी महासेतुर्महेश्वरि ॥ २०५ ॥

---

1. B °शो । 2. BCN सद्गुणाः । 3. C वेध° । 4. DN °स्यं परमं । 5. B अवश्यं; N आविश; D omits three lines. 6. CN लाय° । 7. C स° । 8. C रिक्ताया; N रिक्तिया । 9. D °न्द्राणा° । 10. C ते देवि । 11. D शक्तिः । 12. D °द्धार्णवेन; B सिन्ध्वर्णवे । 13. C °ग° । 14. B पि; C प्र° ।

महाविद्यार्णवस्याथ चैतन्यस्य प्रदर्शकः ।
महासेतुर्महादेवि महाविद्यास्वरूपधृक् ॥ २०६ ॥
[1]देवतायास्तु निर्वाणं चैतन्यं यच्च कीर्तितम् ।
निर्वाणं कथितं भद्रे विद्यावाक्मातृकार्णकैः ॥ २०७ ॥
[2]निर्वाणं परमेशानि सेतुश्चरणरूपधृक् ।
निर्वाणं तु महेशानि[3] परब्रह्मात्मता शिवे[4] ॥ २०८ ॥
चतुर्थं कथितं भद्रे विद्याचरणमीरितम् ।
पंचमी कुण्डली देवी यथावदवधारय ॥ २०९ ॥
मूलाधाराद्बिलान्तं च विषतन्तुस्वरूपिणीम्[5] ।
सर्वदेवस्वरूपाञ्च[6] सर्ववर्णप्रदीपिनीम्[7] ॥ २१० ॥
महाकुण्डलिनीं देवीममरी[8] कुण्डलीं पराम् ।
प्रथमं कालिकादेव्याः कुल्लुका पञ्चमी परा ॥ २११ ॥
काली कूर्च[9] वधू माया फडंता परिकीर्तिता ।
तारायास्त्र्यक्षरी नीला छिन्ना चाष्टाक्षरी भवेत् ॥ २१२ ॥
वज्रवैरोचनी ये च अन्ते वर्म प्रकीर्तितम् ।
हैस्त्रं[10] बीजं तु भैरव्याः कुल्लुका परिकीर्तिता ॥ २१३ ॥
श्रीमत्त्रिपुरसुन्दर्याः कुल्लुका द्वादशाक्षरी ।
वाग्भवं कामराजं च लज्जा च त्रिपुरेशि च[11] ॥ २१४ ॥
भगवति ततः स्वाहा कुल्लुकां त्रिपुरामनोः[12] ।
अन्यासां प्रणवं तारा[13] कूर्चेत्ति त्र्यक्षरी मता ॥ २१५ ॥
अघोरश्च विरूपाक्षः छिन्नाया द्वारदेवताः ।
क्रमेण कुल्लुकादीनां ऋषयः परिकीर्तिताः ॥ २१६ ॥
छन्दः स्वस्वदेवताया बीजशक्त्यादिकं तथा ।
पुरश्चर्यादिकं देवि कर्तव्यं स्वस्वमूलवत् ॥ २१७ ॥
महाकुण्डलिनी वक्ष्ये सर्वतंत्रेषु गोपिताम् ।
प्रणवं च तथा[14]जूँ सः काल[15]मूर्तिपदं ततः ॥ २१८ ॥
कालप्रबोधिनिपदं कालातीतेपदं वदेत् ।
कालदायिनिशब्दान्ते कपालपात्रधारिणि ॥ २१९ ॥
अमरीति कुण्डलिनि[16] जूँ सः वज्रत्रयं तथा ।
सोऽहं स्वाहा महेशानि महाकुण्डलिनी मनुः* ॥ २२० ॥

1. D omits three lines. 2. C omits this line. 3. C परमेशानि । 4. D मतः । 5. N °णी; C °णं । 6. B °पाञ्च; C °पञ्च । 7. C °दायिनीं । 8. B °मारी; C °मरां । 9. CD °र्चं । 10. C हैं; B हेत्रैं; D हेरम्ब° । 11. B °ति च; C °ण वै; N शिवे । 12. B रविः । 13 CN °र° । 14. B त्रपा, CN त्रया । :15. D °लि° । 16. CN °ति; D °नि: B adds देवि । *The Mantra as expressed by the foregoing five lines is given in full in D as follows:–ओं जूँ सः कालमूर्ति कालप्रबोधिनि कालात ते कालदायिनि कपालपात्रधारिणि अमरि कुण्डलिनि जूँ सः वज्र वज्र वज्र सोऽहं स्वाहा ।

चिंतयेत्कुण्डलीं देवी मू[1]लचूलिनिवासिनीम ।
तदधः कामराजं च सा[2] प्रोक्ता स्पर्शसुन्दरी ॥ २२१ ॥
महाकाम[3]कलारूपां काकिनीमूर्ध्नि[4] संस्थिताम् ।
सेत्वादिकं पूर्वमुक्तं किं भूयः श्रोतुमिच्छसि ॥ २२२ ॥

**श्रीदेव्युवाच ।**

देवेश श्रोतुमिच्छामि पूर्वोक्तं यद्रहस्यकम् ।

**श्रीशिव उवाच ।**

किं तद्रहस्यं देवेशि प्रकाशय ममाधुना ॥ २२३ ॥

**श्रीदेव्युवाच ।**

महाकालादिनित्यानां निर्णयद्वितयं वद[5] ।

**श्रीशिव उवाच ।**

महाकालं समारभ्य नित्यानां निर्णयं शृणु ॥ २२४ ॥
महाकालो महाभीमः प्रलयानलसन्निभः ।
कालीमाया[6]समुद्भूतः कालीमानसिकः शिवः ॥ २२५ ॥
महाकालः परशंभुः परातीतगुणाकरः ।
तस्य मंत्रं प्रवक्ष्यामि येन रक्ष्यं जगत्त्रयम् ॥ २२६ ॥
कूर्चयुग्मं महाकाल[7] प्रसीदेति पदद्वयम् ।
लज्जायुग्मं वन्हिजायासंयुक्तः षोडशार्णकः* ॥ २२७ ॥
षोडशार्णा यथा मुख्या[8] सर्वश्रीचक्रमण्डले ।
तथायं सर्वकालीषु महाकालः प्रकीर्तितः ॥ २२८ ॥
[9]कालिकाऽस्य ऋषिः प्रोक्तो विराट्छन्दः प्रकीर्तितम् ।
देवता तु महाकालः सर्वरूपी[10] निरंजनः ॥ २२९ ॥
कूर्चं बीजं तथा माया शक्तिरत्र प्रकीर्तिता[11] ।
स्वाहा कीलकमुद्दिष्टं काल्यर्थे विनियोगता ॥ २३० ॥
मायया तु षडंगानि ध्यानं शृणु वरानने ।
कोटिकालानलाभासं चतुर्भुजं त्रिलोचनम् ॥ २३१ ॥
श्मशानाष्टकमध्यस्थं मुण्डाष्टकविभूषितम् ।
पंचप्रेतस्थितं देवं त्रिशूलं डमरुं तथा ॥ २३२ ॥
खड्गं च खर्परं चैव वामदक्षिणयोगतः ।
बिभ्रतं[12] सुन्दरं देहं श्मशानभस्मभूषितम् ॥ २३३ ॥

---

1. D चू° । 2. D °कला देवि । 3. CN °ल° । 4. D °र्त्ति° । 5. C तव । 6. C °तास° । 7. CN °लं । 8. N °ल्या । 9. D omits four lines. 10. N °प° । 11. N °जायते । 12. B °न्तं । *The restoration of the 16-syllabled mantra as given in MS. D runs as follows:—हूँ हूँ महाकाल प्रसीद प्रसीद ह्रीँ ह्रीँ स्वाहा ।

नानाशवैः क्रीडमानं कालिका[1]हृदयस्थितम्[2] ।
लालयन्तं रतास[3]क्तं घोरचुम्बनतत्परम् ॥ २३४ ॥
गृध्रगोमायुसंयुक्तं फेरवीगणसंयुतम्[4] ।
जटापटलशोभाढ्यं सर्वशून्यालयस्थितम् ॥ २३५ ॥
सर्वशून्यं मुण्डभूषं प्रसन्नवदनं शिवम् ।
भावयेत्परमेशानि रतियंत्रं तु पञ्च[5] च ॥ २३६ ॥
त्रिकोणसंज्ञा योनिः स्यात्तच्चक्रं कालचक्रकम् ।
योनौ वा[6] हृदये भाले कामिन्याः स्तनमण्डले ॥ २३७ ॥
महाकालं यजेद्दे[7]वं पञ्चा[8]वरणसंयुतम् ।
त्रिकोणे पूजयेद्देवि त्रिकोणं कालिकादिकम् ॥ २३८ ॥
षड्दले तु षडंगानि नाभौ दिक्शक्तयो मताः ।
हृदये द्वादशादित्याः कंठे षोडशनित्यकाः ॥ २३९ ॥
द्विपत्रे परमेशानि काल[9]कालीं प्रपूजयेत् ।
* * * देवि तां[10] देवीं पूजयेद्विभूम्[11] ॥ २४० ॥
शक्तिं स्वाभिमुखीं कृत्वा पूजयेत्कालिकां पराम् ।
मूलाधाराद् द्विपत्रान्तं यथा चक्राणि कारयेत् ॥ २४१ ॥
पूजयेत्परमेशानि गुरुपूजापुरःसरम्[12] ।
पात्रा[13]सादनकं कृत्वा कालीवत् परिपूजयेत् ॥ २४२ ॥
एवं पूजां विधायाऽथ लक्षसंख्यं जपेच्छिवे ।
तद्दशांशेन हवनं करवीरप्रसूनकैः ॥ २४३ ॥
स्वयंभुवाक्तैर्बीजाक्तैः[14] कारणाक्तैश्च वा हुनेत् ।
नित्यं नैमित्तिकं काम्यं कालीवत् सर्वमाचरेत् ॥ २४४ ॥
अन्तर्धानकरी[15] काली विद्याया विधिरुच्यते ।
मुर्तिं ध्यानोदितां ध्यात्वा सर्वावयवशोभिताम् ॥ २४५ ॥
मूलाधारे गणपतिं लिङ्गे गणप[16]वल्लभाम् ।
नाभौ बटुकनाथं च हृदि[17] बटुकवल्लभाम् ॥ २४६ ॥
कण्ठे उड्यान[18]पीठं च भ्रु[19]वि प्रदीप्तमंग[20]लाम्।
ललाटे करवीरं च अलके क्षेत्रपालकम् ॥ २४७ ॥
मुर्ध्नि वै कालिकां चैव चतुर्थ्यंतां प्रपूजयेत् ।
मुर्ध्नि व्योमैश्वर्याम्बां[21] च ललाटे खेचरीं तथा ॥ २४८ ॥

---

1. N °कां । 2. N °तां; C °ते । 3. N लतासू° । 4. N °तां । 5. B यन्त्र° । 6. D योनिगे । 7. B °दे° । 8. B पंचवा° । 9. B महा° । 10. B तौ । 11. D रतौ देवीं प्रपूजयेत् । 12. B °र। । 13. N °त्रोत् । 14. N °न्तं । 15. N °र्धान्तनकरा । 16. B तु गण° । 17. B हार्दे । 18. C कुड्डण°; D तु ज्ञान° । 19. CN भ्रु° । 20. C °ल्ल° । 21. CN °र्यम्बां ।

भूमध्ये दिक्चरीं चैव हृदये गोचरीं तथा ।
नाभौ च भूचरीं चैव लिंगे च खग[1]मुर्तिकाम् ॥ २४९ ॥
मूलपत्रे विचित्रा च पूजयेत्साधकोत्तमः ।
तथा ललाटे सूर्यं च दक्षनेत्रे कलाधिपम् ॥ २५० ॥
वैश्वानरं वामनेत्रे कण्ठे च कालिका तथा ।
[2]हृदये दासयोनिं च नाभौ च दाससिद्ध[3]कम् ॥ २५१ ॥
ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा ।
वाराहैन्द्री च चामुण्डा महालक्ष्मी परा मता ॥ २५२ ॥
मंथानभैरवश्चैव षट्चक्रभैरवस्तथा ।
[4]फट्कारभैरवश्चैव बिभ[5]क्षभैरवस्तथा ॥ २५३ ॥
वीरेशभैरवश्चैव श्रीमन्तेश्वर[6]भैरवः ।
हंसगर्भ[7]भैरवश्च चण्डिकेश्वरभैरवः ॥ २५४ ॥
मूर्ध्नि ललाटे कंठे[8] च हृदये नाभिमण्डले ।
लिंगे च मूलाधारे च सर्वांगे पूजयेत्सुधीः ॥ २५५ ॥
यथाशक्ति जपेद्विद्यां बलिं दद्याद्यथाविधि ।
ॐ क्षें[9] च क्षेत्रपाल[10] इमं बलिं[11]पदं वदेत् ॥ २५६ ॥
गृण्हयुक् स्वाहया युक्तः[12]क्षेत्रपालबलिर्मता* ।
इति पूजाविधिर्देवि श्रीकालीकालयोर्मता ॥ २५७ ॥
अंतर्धान विधौ देवि * * * मता ।
महाकालप्रसंगेन रहस्यमपि दर्शितम् ॥ २५८ ॥
गोपनीयं त्वया भद्रे रहस्यातिरहस्यकम् ।
गोपनीयं गोपनीयं स्वयोनिरपरा यथा ।
इति संक्षेपतः प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ॥ २५९ ॥

इति श्रीशक्तिसङ्गममहातन्त्रराजे उत्तरभागे तृतीयखण्डे श्रीमदक्षोभ्यमहोग्रतारासंवादे महाकालमन्त्रविधिर्नामैकादशः[13] पटलः ।

---

1. D °ड्ग° । 2. D omits two lines. 3. B दीप्तसिद्धि° । 4. DN omit this line. 5. B बिम्भ° । 6. D °तत्रिपुर° । 7. B °सर्ग° । 8. D कटौ । 9. D भ्रक्षं । 10. B °लय; CN °ला । 11. CN °लि° । 12. D गृह्णापद गृह्णयुग्मं; C गृण्ह गृण्हपदं युक्तं । 13. B दशमः ।

* The mantra may be restored as follows—ओं क्षें क्षेत्रपाल इमं बलिं गृह्ण गृह्ण स्वाहा ।

## द्वादशः पटलः ।

**श्रीदेव्युवाच ।**

देवेश श्रोतुमिच्छामि रहस्यातिरहस्यकम् ।

**श्रीशिव उवाच ।**

अन्तर्धानविधिः प्रोक्ता परकाय[1]प्रवेशनम् ॥ १ ॥
[2]कथ्यते देवदेवेशि श्रृणु सावहिता भव ।
कुलाकुलसमुद्भूतममृतानन्दमर्चयेत् ॥ २ ॥
सूर्यकोटिसमं मंत्रं[3] बादिमध्ये व्यवस्थितम् ।
जपेत्कुलामृतं दत्वा * * *समुद्भवम् ॥ ३ ॥
तथा कुले * * * कुण्डलीदृढबन्धनात् ।
आधारे पत्रमध्ये च द्विपत्रे द्विपद्मालये ॥ ४ ॥
षोडशारे युते[4] लिंगे द्वादशे मणिपूरके ।
हृदये दशपत्रे च द्वादशार्धे चतुर्दले ॥ ५ ॥
कण्ठे भाले यजेद्देवि जिव्हाललनसंकुले ।
अवकाशागारमध्ये तु ब्रह्मचर्यव्रतो नरः ॥ ६ ॥
संकल्पैर्धवलैर्वापि श्वेतवस्त्रावगुण्ठितम् ।
गच्छति ब्रह्ममार्गेण लिङ्गभेदक्रमेण च ॥ ७ ॥
विसर्गस्थामृतं दिव्यं क्षीरधारोपमं द्रवम्[5] ।
पीत्वा कुलामृतं तत्र पुनरेव विशेत्कुलम् ॥ ८ ॥
पुनरेवाकुलं गच्छेद् द्वादशान्ते निवेदयेत् ।
सहस्रारे महाचक्रे वाग्भवं[6] पूर्ण[7]चन्द्रकम् ॥ ९ ॥
ब्रह्म[8]ग्रन्थि ततो भित्वा पीत्वा सप्ताष्टधारया ।
लम्बिकाद् ब्रह्ममार्गेण तालुमूले प्रवेशयेत् ॥ १० ॥
जिव्हामापूर्य[9] तां विद्यां मातृकावर्णरूपिणीम् ।
बहिर्गतां वर्णरूपा जिव्हाग्रे दीपरूपिणीम् ॥ ११ ॥
आमूलाद्ब्रह्मरंध्रांतं तथा जिव्हाग्र[10]देशगाम् ।
वाग्भवाद्यां महाविद्यां दीपाकारा विचिन्तयेत् ॥ १२ ॥
हस्तयोः पादयोर्विद्यां त[11]था नाडीत्रयेषु च[12] ।
आधारात्तु समुत्थाप्य वागी[13]शी द्वादशे नयेत्[14] ॥ १३ ॥
द्वादशाधारमादा[15]य तद्ग्रंथि परिभेदयेत् ।
तस्माज्जिव्हाग्रमादाय दीपाकारां विभाव[16]येत् ॥ १४ ॥

1. B °या° । 2. D omits this line. 3. CDN सूत्रं । 4. C तथा; N च ते; D °न्यास° । 5. D स्मृतं; C मण्डपं । 6. N °वे । 7. D सूर्य° । 8. D पद्म° । 9. N °ज्य । 10. N प्र° । 11. C य° । 12. N प्रवेशयेत् । 13. B °गे° । 14. N जपेत् । 15. B °या° । 16. D °चिन्त° ।

लक्षमेकं तत्र जप्त्वा सर्वपापं विनिर्दहेत्[1] ।
ततश्चराचरं सर्वं ज्ञात्वा सर्वज्ञतां नयेत् ॥ १५ ॥
प्राणायामप्रभावेन जपसिद्धिः प्रजायते ।
एकविंशतिसाहस्रं षट्शताधिकमेव च ॥ १६ ॥
प्रत्यहं जयते[2] जीवो ब्रह्मानन्दमयी पराम् ।
उत्पत्तिर्जप[3] आरंभो मृ[4]तिरस्या[5] निवेदनम् ॥ १७ ॥
विना जपेन सततं जपो भवति सर्वदा ।
एवं जपं सुविज्ञाय गणेशादौ निवेदयेत् ॥ १८ ॥
[6]जीवात्मनः क्रमेणैव तथा च परमात्मनः ।
षट् शतानि सहस्राणि षडेव च तथा पुनः ॥ १९ ॥
षट् सहस्राणि ततो[7] सहस्रं चै[8]तदेव हि ।
पुनः सहस्रं गुरवे क्रमेण विनिवेदयेत् ॥ २० ॥
आधारे स्वर्णवर्णेऽस्मिन्वादिसान्तानि संस्मरेत् ।
विद्युत्पुञ्जप्रभाभा[9]नि चिन्तयेत् मणिपूरके ॥ २१ ॥
महानीलप्रभाभा[10]नि डादिफान्ता[11]नि चिन्तयेत् ।
पिङ्गवर्णमहावन्हि कर्णिकाभं वि[12]चिन्तयेत्[13] ॥ २२ ॥
कादिठा[14]न्तानि वर्णानि चतुर्थेनाहते[15] स्मरेत् ।
विशुद्धे धूम्र[16]वर्णे तु रक्तवर्णान्स्वरान् न्यसेत्[17] ॥ २३ ॥
आज्ञायां विद्युदा[18]भायां शुभ्रौ[19] ह[20]क्षौ विचिन्तयेत् ।
कर्पूरद्युतिसंराजत्स[21]हस्रदलपङ्कजे ॥ २४ ॥
नीलात्मकं ब्रह्म[22]रन्ध्रे चिंतयेच्च ततः परम् ।
फलं चास्य प्रवक्ष्यामि षड्चक्रेषु यथाक्रमम् ॥ २५ ॥
आधारे भावनाभ्यासान्मंत्रसिद्धिः प्रजायते ।
* * च भावनाभ्यासाद्विद्या वीर्यवती भवेत् ॥ २६ ॥
ततो ध्यायेन्नाभिचक्रे विद्याज्ञानस्य हेतवे ।
देहज्ञानं लभेन्मंत्री षण्मासाभ्यंतरेण च ॥ २७ ॥
हृदब्जे भावनाभ्यासात्त्रिकालज्ञो नरो[23]भवेत् ।
कण्ठे च भावनाभ्यासाद्देहसिद्धिः प्रजायते ॥ २८ ॥
सूर्यस[24]त्त्वान्महायोगी त्रैलोक्ये यद्भवत्यपि ।
जानात्यहरहो मंत्री त्रैलोक्ये च न संशयः ॥ २९ ॥

---

1. B °र्दिशेत । 2. D °तो । 3. D °जपि° । 4. CN मृ° । 5. CN °स्य । 6. CD omit four lines. 7. N सततं । 8. N वै° । 9. D °वा° । 10. D °त्रा° । 11. B °पराभा° । 12. CD °भाति । 13. B adds a line which is redundant. गणेशो ब्रह्मा विष्णुश्च तथा रुद्रश्च शाकरि । 14. B °ग° । 15. C °त. । 16. B धर्म° । 17. B °जे° । 18. B °द्रुमा° । 19. B °क्रो, D °भौ । 20. B रु° । 21. CN °न्स° । 22. C पद्म° । 23. D °ज्ञानवान् । 24. D °त° ।

शिवचंद्रसमायोगा[1]ज्जाप्य[2] शुक्रज्ञ[3]वान्भवेत्[4] ।
उदान[5]मभ्यसेन्नित्यं जलस्तंभनहेतवे ॥ ३० ॥
समानाभ्यासतो योगी वह्निनाऽपि न दह्यते ।
ततः सूक्ष्मो महाभूतः सूक्ष्ममुत्तारयेदपि ॥ ३१ ॥
मनोजवो[6] भवे[7]न्मंत्री कालिकाध्यानयोगतः ।
देहज्ञानप्रभावेन अन्तर्धानमवाप्नुयात् ॥ ३२ ॥
अन्तर्धानप्रभावेन परदेहं प्रवेशयेत् ।
अणिमाद्यष्टभावेशः कोटिसिद्धीश्वरो भवेत् ॥ ३३ ॥
अलभ्यं लभते योगी महामंत्रानुभावतः ।
इत्यादि सिद्धिभावेषु[8] वैराग्यं यदि जायते ॥ ३४ ॥
कैवल्यं लभते योगी कालीव्यापकतामियात्[9] ।
इति संक्षेपतः प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ॥ ३५ ॥

श्रीदेव्युवाच ।

देवेश श्रोतुमिच्छामि कालीनित्याविनिर्णयम् ।

श्रीशिव उवाच ।

काली कपालिनी कुल्ला कुरुकुल्ला विरोधिनी ॥ ३६ ॥
विप्रचित्ता तथोग्रोग्रप्रभा दीप्ताऽथवा तथा ।
नीला घना बलाका च मात्रा मुद्रा मिता तथा ॥ ३७ ॥
नित्यामण्डलमेतद्धि तत्क्रमं शृणु शांभवि[10] ।
कालीनित्या च तन्मन्त्रः कथ्यते शृणु साम्प्रतम् ॥ ३८ ॥
विषबीजं ततो माया कालीति युगलं वदेत् ।
महाकालि पदं प्रोच्य कौमारीति पदं वदेत् ॥ ३९ ॥
[11]मह्यं[12] देहि पदं देवि ठठ[13]युक्ता मनुर्मता* ।
ऊनविंशाक्षरी विद्या कालीनित्या प्रकीर्त्तिता ॥ ४० ॥
पर्शुरामो ऋषिः प्रोक्तश्छन्दोऽनुष्टुप् प्रकीर्त्तितम् ।
[14]देवता कालिका प्रोक्ता माया बीजं प्रकीर्त्तितम् ॥ ४१ ॥
कालिका च भवेच्छक्तिः ठ[15]युग्मं कीलकं भवेत् ।
कालिकाप्रीणनाद्यर्थे विनियोगः प्रकीर्त्तितः ॥ ४२ ॥
षडङ्गमाचरेद्देवि जातियुक्तेन मायया ।
ततो ध्यायेन्महेशानि चिता[16]निर्वाण[17]मण्डले[18] ॥ ४३ ॥

---

1. C °गी । 2. B ज्योतिःषात् ; N °ज्योपि । 3. C °त्व° । 4. D reads ह्रोऽपि शुक्रज्ञानवान् । 5. D तदानी° । 6. D °वेन । 7. D त° । 8. D सिद्धिभागेषु । 9. C कालीकालो च व्यापकं; D कालं व्यापकंमुत्तमं । 10. D पार्वति । 11. B omits two lines. 12. N भगं । 13. C तर° । 14. DN omit this line. 15. B °ह° । 16. D ततो । 17. N °मणि° । 18. DN पे, C °लं ।

* The mantra is restored in D as below ओं ह्रीं कालि कालि महाकालि कौमारि मह्यं देहि स्वाहा ।

श्यामवर्णा महाभीमा घोररावा करा[1]लिनी[2] ।
मुण्डमालाविभूषाढ्या दक्षे खड्गं प्र[3]बिभ्रती ॥ ४४ ॥
तर्जनीं धारयन् वा[4]मे नृत्यन्ती प्रेतभूमिषु ।
एवं ध्यात्वा महेशानि तद्यन्त्रं शृणु पार्वति ॥ ४५ ॥
त्रिकोणयुग्मं देवेशि वृत्ताष्टदलभूपुरम् ।
बिन्दौ काली समाराध्य त्रिकोणयुग्मके पुनः ॥ ४६ ॥
गुणत्रयं तत्पुरुषा[5]स्तच्छक्तयः क्रमान्मताः ।
ब्राह्मयादिमातरश्चाष्टौ लोकपालाः सशस्त्र काः ॥ ४७ ॥
भूपुरे पूजयेद्देवि धूपदीपोपचारकैः ।
नैवेद्यं विविधं खा[7]द्यं पंचखा[8]द्यं विशेषतः ॥ ४८ ॥
निवेदयेत्कालिकायै ततस्तुष्टा भविष्यति ।
नीराजनान्तं कृत्वाऽथ प्रजपेल्लक्षमात्रकम् ॥ ४९ ॥
दशांशं पायसेनैव होमं कुर्याद्विधानतः ।
अथवा करवीरेण होमयेत्सर्वसिद्धये ॥ ५० ॥
सर्वसिद्धीश्वरो देवि भवत्येव न संशयः ।
मंत्रभेदान्प्र[9]वक्ष्यामि यथावदवधारय ॥ ५१ ॥
नामत्रयं[10] महेशानि प्रत्येकं[11] प्रणवक्रमात् ।
मंत्रत्रयं महेशानि बीजत्रयनियोजनात् ॥ ५२ ॥
विद्यात्रयं पुनर्देवि ध्रुवमायानियोजनात् ।
विद्यात्रयं महेशानि प्रत्येकं नवधा मनुः ॥ ५३ ॥
दुर्भगाना च दीनानां क्रूराणा पापकर्मिणाम् ।
मंत्रमेनं न[12] कथयेत्सर्वैश्वर्य्यमयो भवेत् ॥ ५४ ॥
लक्ष्मीवान्कीर्तिमान्धन्यो भवत्येव न संशयः ।
सुन्दरीं कामिनीं दृष्ट्वा तस्याश्चैव * * वदेत् ॥ ५५ ॥
* * शब्देन तद्भंग[13] सा दासी मंत्रजापतः ।
व्याकुला सा[14] भवत्येव स्वेच्छया भोगमेष्यति ॥ ५६ ॥
ललाटे हृदये विद्या योनिमध्ये यथाक्रमम् ।
यस्याः संचिन्तयेद्विद्यां तन्नामस्मृतिपूर्वक[15]म् ॥ ५७ ॥
तामाकर्षयति क्षिप्र[16] किमन्यैर्ब[17]हुजल्पितैः ।
साक्षात्स कालीपुत्रः स्यान्नात्र कार्या विचारणा ।
इति संक्षेपतः प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ॥ ५९ ॥

इति श्रीशक्तिसङ्गममहातन्त्रराजे उत्तरभागे तृतीयखण्डे श्रीमदक्षोभ्यमहोग्रतारासंवादे कालीनित्यानाम द्वादशः पटलः ।

---

1. CD °वा° । 2. N °न । 3. B च । 4. N °येद्वा° । 5. CN °ष° । 6. N °ह्म° । 7. B स्वा°; C वा° । 8. D °भा° । 9. D °दानं प्र° । 10. DN °ये । 11. N °वं । 12. B प्र° । 13. B भृंगं च । 14. CN सं° । 15. D °र्विका° । 16. CDN प्राज्ञः । 17. N °न्यत् ब° ।

## त्रयोदशः पटलः।

**श्रीदेव्युवाच।**

देवेश श्रोतुमिच्छामि कपालिन्या विधिं पराम्।
नित्या[1] द्वितीया देवेश प्रोक्ता क[2]पालिनी परा ॥ १ ॥
तस्या मंत्रं महेशान कथयस्व ममाधुना।

**श्रीशिव उवाच।**

देवेशि कथ्यते गोप्यं यन्न कुत्रा[3]ऽपि कीर्तितम् ॥ २ ॥
कपालिनी महाविद्या द्वितीया तन्मतुं[4] शृणु।
आदौ सप्तकु[5]लं प्रोच्य कामं वह्नि[6]पदे स्थितम् ॥ ३ ॥
इन्दिराबिन्दु[7]भूषाढ्य बीजं कालीस्वरूपकम्।
कपालिनि महा[8]कपालप्रियमानसे वदेत्[9] ॥ ४ ॥
कपालसिद्धिं मे देहि हूँ फट् स्वाहान्तको मनुः[10] *।
त्रिंशद्वर्णोऽर्धवर्णाढ्यो मंत्रराजो महोत्तमः ॥ ५ ॥
भैरवोऽस्य ऋषिः प्रोक्तस्त्रिष्टुप् छंद उदाहृतम्।
कपालिनी देवताऽत्र कालिका बीजमीरितम् ॥ ६ ॥
स्वाहा शक्तिः समाख्याता हूँ फट् कीलकमीरितम्।
कपालिनीसिद्धयेऽत्र विनियोगः प्रकीर्तितः ॥ ७ ॥
षड्दीर्घभाजा बीजेन कुर्यादङ्गानि षट्क्रमात्।
ध्यायेदञ्जनपुञ्जाभामापीनस्तनयुग्मकाम् ॥ ८ ॥
चन्द्र[11]वक्त्रां च बिम्बोष्ठीं मुक्तकेशीं दिगम्बराम्।
चतुर्मुंडो[12]परिगतां शङ्खकङ्कणभूषिताम्[13] ॥ ९ ॥
खड्गत्रिशूलवरदाभयान् हस्तचतुष्ठये[14]।
क्रमात्संबिभ्रतीं देवीं गीतहास्यपरायणाम् ॥ १० ॥
एवं सञ्चितयेद्देवि[15] नित्यां[16] कपालिनीं पराम्।
त्रिकोणत्रितयं वृत्त दलाष्टकविभूषितम् ॥ ११ ॥
भूपुरेण समाकीर्णं[17] चतुर्द्वारोपशोभितम्।
यंत्रं कपालिनीदेव्याः सर्वसाम्राज्यदायकम् ॥ १२ ॥
महाकाली महालक्ष्मीं महासरस्वतीं तथा।
रतिं प्रीतिं तथा कांतिं द्वितीये तु[18] त्रिकोणके[19] ॥ १३ ॥

---

1. N रक्षा। 2. DN का°। 3. D कस्या°। 4. N °तं। 5. B °क°। 6. B विह्नि°। 7. C °वह्नि°। 8. B महामाये। 9. B omits. 10. N °तः। 11. D °रक्त°। 12. D °मर्त्यों°। 13. D शव परि कपालिनीं। 14. N °यं। 15. D °वीं। 16. CDN महा°। 17. D युक्तं। 18. N °ऽय, C °यस्यं। 19. D द्वितीयाद्यं तृतीयके।

* The mantra is restored in D as ओँ ह्रीँ क्रीँ कपालिनि महाकपालप्रियमानसे कपालसिद्धिं मे देहि हूँ फट् स्वाहा।

इच्छां ज्ञानं क्रियां चैव त्रिकोणे तु तृतीयके ।
मध्ये कपालिनी पूज्य दलेऽष्टौ मातृकार्चनम् ॥ १४ ॥
ततोऽष्टौ भैरवांश्चैव दिगीशान् श[1]स्त्रकान्यजेत् ।
पंचोपचारैः संपूज्य कुलाचारपरायण: ॥ १५ ॥
साधकः प्रजपे[2]ल्लक्षं हयारि[3]कुसुमैर्हुनेत् ।
मांसेन मधुना चा[4]पि जुहुयादिष्टसिद्धये ॥ १६ ॥
तदा कपालिनी देवी सिद्धा[5] भवति निश्चितम् ।
पुरश्चर्यां विना देवि कथं सिद्धा कपालिनी ॥ १७ ॥
मुण्डासने नरः[6] स्थित्वा सदा तद्गतमानसः ।
महामालां महापात्रं महायंत्रा[7]सना[8]दिकम् ॥ १८ ॥
कृत्वा तु विधिवद्देवि तदा भवति साधकः ।
अथान्यदपि वक्ष्यामि कपालिन्याः पराक्रमम् ॥ १९ ॥
रण[9]वीरकपालानि कु[10]जवारे निशामुखे ।
समाहृत्य महेशानि पंच पंच समन्वितः ॥ २० ॥
दिग्बन्धभूतशुद्धा[11]दिक[12]पालाद्युपहारकैः ।
साधकः सहितो भूत्वा सिदूरतिलकाङ्कितः ॥ २१ ॥
खड्गहस्तो दिशावासो मुक्तकेशो मुदान्वितः ।
ईदृशः साधकः सोऽहङ्कृतिभावसमन्वितः ॥ २२ ॥
सुदूरे साधकान् स्थाप्य पुष्पवर्त्या[13] घृताक्तया ।
दीपं संलापयेद्देवि जपेत्त[14]त्र कपालिनीम् ॥ २३ ॥
भाग्यात्कपालिनीसिद्धिः कदाचित्प्रभविष्यति ।
तथापि कालिकाभक्ते भविष्यति भविष्यति ॥ २४ ॥
कपालं[15] भाग्ययोगेन कदाचिद्यदि लभ्यते ।
तदा कपालिनी सिद्धिः कज्ज्वलं तद्धि संग्रहेत् ॥ २५ ॥
तत्कज्ज्वलं कपाले तु कज्ज्वलं स्थाप्य वै जपेत् ।
सं[16]मोहनाञ्जनं[17] नाम महदञ्जनमीरितम् ॥ २६ ॥
तत्कपाले[18] महेशानि किं तद्यन्न करे स्थितम् ।
एषा कपालिनी नित्या द्वितीया कालिका भवेत्[19] ॥ २७ ॥
इति संक्षेपतः प्रोक्तं कुल्लां शृणु तृतीयकाम् ।
कालिका कुल्लुका कुल्ला त्रिधा नाम्ना तु या मता[20] ॥ २८ ॥
तस्मात्कुल्लेति नाम्ना च कुलपूज्यत्वता गता ।
विद्यानां कुलपूज्यत्वात्कुल्लुका परिकीर्तिता ॥ २९ ॥

---

1. C शा । 2. N पूजये° । 3. C °दि° । 4. CN वा° । 5. CN °द्धिर्भ° । 6. B वं° । 7. C °मंत्रा° । 8. CN °भा° । 9. C रसा° । 10. N °जे । 11. C °सिध्या° । 12. B दिक् । 13. B °त्वा:; D °त्या, C त्यां । 14. C °थ° । 15. D °लिनी । 16. B सु° । 17. D सा महालाञ्छनं । 18. D तत्कज्ज्वलं । 19. N च तत्; B वदेत् । 20. D तदा ।

कुल्लुका कुलपूज्यत्वात्कुल्लानाम्नी कुलेश्वरी ।
तस्या मंत्रं प्रवक्ष्यामि यथावदवधारय ॥ ३० ॥
प्रणवं पूर्वमुद्धृत्य कालिकाबीजमुद्धरेत् ।
कुल्लायै[1] ह्नमनुर्देवि प्रोक्तः सप्ताक्षरो मनुः ॥ ३१ ॥
भैरवोऽस्य ऋषिः प्रोक्तो गायत्री छंद ईरितम् ।
कुल्ला काली[2] देवताऽत्र कालिका बीजमीरितम् ॥ ३२ ॥
कुल्लाशक्तिरिति ख्याता नमः कीलकमीरितम् ।
सर्वार्थसाधने चैव विनियोगः प्रकीर्तितः ॥ ३३ ॥
कालिकोक्ते यजेत् पीठे कुमारीयंत्रमेव हि ।
कुमार्याः पूजनाद्देवि कुल्ला सिद्धा भवेद् ध्रुवम् ॥ ३४ ॥
लक्षद्वयं जपेन्मंत्रं हविष्याशी दिवा शुचिः ।
अशुचिश्च तथा रात्रौ श्रीकुल्लादर्शनोत्सुकः ॥ ३५ ॥
कदाचिदभ्रसदृशां कदाचित्[3] ज्योतिसन्निभाम् ।
चतुर्भुजा त्रिनयनां मुकुटाटोपमण्डिताम् ॥ ३६ ॥
शवासनगतां कुल्ला दशमुण्डोपरिस्थिताम् ।
वराभयौ करे वामे पुस्तस्रक्[5] दक्षिणे करे ॥ ३७ ॥
नानाविलासकुशलां कुल्लाम्बां परिचिन्तयेत् ।
एवं चितयतस्तस्य दशविद्यामयी कला ॥ ३८ ॥
भवत्येव महेशानि कुल्लाम्नाया:[6] प्रभावतः ।
करवीरैर्जपा[7]पुष्पैर्हुनेञ्जपदशांशतः ॥ ३९ ॥
तद्दशांशं[8] गन्धतोयैस्तर्पयेन्मार्जयेदपि ।
ब्राह्मणान्भोजयेद्देवि तदन्ते तु कुमारिकाम् ॥ ४० ॥
पूजयेत्परमेशानि कुल्लाविद्या प्रसिध्यति ।
कुल्लाविद्या महेशानि सर्वविद्याप्रकाशिनी ॥ ४१ ॥
यं[9]त्रमस्यास्ति देवेशि नैमित्ते काम्यकर्मणि ।
त्रिकोणद्वयमुद्धृत्य वृत्ताष्टदलभूषितम् ॥ ४२ ॥
चतुर्द्वारसमायुक्त भूपुरैकेण संयुतम् ।
मध्ये बीजं न्यसेत्काल्या[10] बीजयुक्तं महोत्तमम् ॥ ४३ ॥
धृतिं पुष्टि तथा[11] मेधां तुष्टि[12] प्रज्ञां तथा[13] जयाम्[14] ।
त्रिकोणद्वितये पूज्य दलेऽष्टमातृभैरवाः ॥ ४४ ॥
लोकपालान् श[15]स्त्रयुक्तान् कुल्लुकावरणे यजेत् ।
अथवा देवदेवेशि कालिकावत्समस्तकम्[16] ॥ ४५ ॥

---

1. B °यै । 2. D कुल्लुकाना । 3. B हि । 4. C °य° । 5. D °कं । 6. D °याश्च । 7. C °वा°; B °या° । 8. B तादृशी । 9. B मं । 10. N °ली° । 11. C च । 12. C च । 13. C चैव । 14. C adds तथा । 15. C शा°; B सा° । 16. B °के ।
B reads verse 45 after 46.

नवरात्रद्वये चन्द्र[1]सूर्यग्र[2]हद्वये तथा[3] ।
संक्रमे चोत्तमे चार्थे[4] पूजयेद्यन्त्रमद्भुतम्[5] ॥ ४६ ॥
यदैव कार्यमुत्पन्नं तदै[6]व कुलुकार्चनम् ।
[7]न विद्या सिद्धिमाप्नोति कुलकार्चनमन्तरा[8] ॥ ४७ ॥
[9]आदिमांत्यसमायुक्ता सा[10] विद्या सिद्धिमाप्नुयात् ।
आदिमांत्यम[11]जानन् हि यो गुरुः स तु शिष्य[12]हा ॥ ४८ ॥
आदिमांत्यक्रियायुक्तो नित्यामंत्रो हि सिध्यति[13] ।
आदिमांत्यविहीनस्य न स्याद्देवस्य दर्शनम्[14] ॥ ४९ ॥
प्रीतिर्भयं द्वयमिति द्वाभ्या संव्यापितं जगत् ।
अयं प्रयोगो गोत्पव्यो न कुत्रापि मयेरितः ॥ ५० ॥
कुल्लादेव्यादिनित्यासु जपो हि द्वितयावधिः ।
द्वितयाभ्यां न सिद्धोऽसौ स मंत्रो न जप[15]क्षमः ॥ ५१ ॥
[16]कुल्ला नित्या तृतीयोक्ता यस्यामेतत्प्रतिष्ठितम्[17] ।
समस्तजगतीसारं कुल्लासंक्षेपपूजनम् ।
इति संक्षेपतः प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ॥ ५२ ॥

इति श्रीशक्तिसङ्गमसहातन्त्रराजे उत्तरभागे तृतीयखण्डे श्रीमदक्षोभ्यमहोग्रतारा-
संवादे कुल्लानित्याविधिर्नाम त्रयोदशः[18] पटलः ।

---

1. D वापि । 2. C °ग्रा° । 3. D ग्रहणद्वयमेव च । 4. D तथा संक्रमणे चैव । 5. D °मुत्तमं । 6. N °दे° । 7. C omits this line. 8. N °मन्यतः । 9. N omits this line. 10. D सा । 11. N ग्र° । 12 D °सिद्धि° । 13. N स विद्यासिद्धिमाप्नुयात् । 14. D reads देवस्य दर्शन नहि । 15. N °पे; C °पं । 16. C omits this line. 17. D reads यस्य देवि सर्वमेतत् प्रतिष्ठति । 18. CN द्वादशः ।

## चतुर्दशः पटलः ।

श्रीदेव्युवाच ।

देवेश श्रोतुमिच्छामि रहस्यमपरं[1] महत् ।
कुरुकुल्लाविधानं च कथयस्व ममाधुना ॥ १ ॥
कुरुकुल्ला च किं नाम किं विधा किं विधो मनुः
सर्वं कथय देवेश यद्यहं तव वल्लभा ॥ २ ॥

श्रीशिव उवाच ।

शृणु देवि प्रवक्ष्यामि रहस्यातिरहस्यकम् ।
विद्यानां कुलपूज्यत्वात्कुल्लुका कुल्लुका[2]धिका ॥ ३ ॥
कुल्लाया अपि पूज्यत्वात्कुरुकुल्ला[3] महोदया ।
तस्या मंत्रो महेशानि सर्वमंत्रोत्तमोत्तमः ॥ ४ ॥
कालिकार्चं[4] समुद्धृत्य कुरुकुल्लेपदं[5] वदेत् ।
कालीं मायां ममपदं सर्वजनपदं ततः ॥ ५ ॥
वशमानय चोच्चार्य कालीं च कुरुकुल्ले च वै ।
पदमुद्धृत्य देवेशि माया[7] स्वाहान्तगो मनुः * ॥ ६ ॥
सप्तविंशत्यर्णसंख्यो मंत्रोऽयं[8] सुरपादपः ।
एतस्या हृन्मनुर्देवि कुरुकुल्ला नवाक्षरी[9] ॥ ७ ॥
[10]श्रं विद्याविषये भिन्ना कुरुकुल्ला महेश्वरि ।
काल्यंग[11]विद्या देवेशि श्रीविद्या कुरुकुल्लिका ॥ ८ ॥
इयं भिन्ना[12] महाविद्या कालीनित्या चतुर्थिका ।
विना तु हृ[13]न्मनुर्देवि कुरुकुल्ला न सिध्यति ॥ ९ ॥
हृन्मनुं कुरुकुल्लाया ज्ञात्वा यत्नेन पार्वति ।
प्रणवं कूर्च[14]मुद्धृत्य कुरुकुल्लेपदं वदेत् ॥ १० ॥
ह्रीँ[15] स्वाहान्तो मनुर्देवि[16] कुरुकुल्ला कुमारिका ।
हृन्मनुत्वेन कथितः सर्वमन्त्रोत्तमोत्तमः ॥ ११ ॥
कालभैरवो ऋषिश्चास्य बृहती छन्द ईरितम् ।
देवता कुरुकुल्ला च सर्वविद्यामयी परा[17] ॥ १२ ॥

---

1. DN °स्यं परमं । 2. C रकुरुकुल्ला कुला° । 3. D कुल्लादेवि । 4. CN ध्रुवं । 5. C °ल्लापदे । 6. B कालीमाया । 7. B °मार्यं° । 8. B °स्या. । 9. D कुमारिका । 10. D omits two lines. 11. CN बालांग° । 12. D विद्या । 13. C त° । 14. DN पूर्व° । 15. B हुँ । 16. C महादेवि । 17. C °.रेता । * The restoration of the Mantra is given in D as क्रीँ ओँ कुरुकुल्ले क्रीँ ह्रीँ मम सर्वजनवशमानय क्रीँ कुरुकुल्ले ह्रीँ स्वाहा ।

क्रीँ[1]बीजं ह्रीँ तथा शक्तिः स्वाहा[2] कीलकमीरितम् ।
[3]कुरुकुल्लाकुमार्यास्तु भैरवो ऋषिरीरितः ॥ १३ ॥
विराट् छन्दो निगदितं कूर्चं बीजं प्रकीर्त्तितम् ।
स्वाहा शक्तिः समुद्दिष्टा विनियोगो यथेच्छया ॥ १४ ॥
कुल[4]कुल्लां मित्रकुल्लां कुरुकुल्लां हृदङ्गमाम् ।
कालीभुवः कुरुकुल्ले क्रीँ ह्रीँच मम सर्वतः ॥ १५ ॥
जनवशं क्रीँ कुरुयुक् कुरुकुल्ले त्रिविष्टपे[5] ।
स्वाहान्तोऽयं समुद्दिष्टो[6] * भैरवो हि विराट् ततः ॥ १६ ॥
हं।ँबीजं च तथा स्वाहा शक्तिः क्रीँ[7] कीलकं मतम् ।
सर्वार्थे विनियोगः स्यात् पूर्ववत् क्वापि कीर्त्तितः ॥ १७ ॥
विनियोगः पूर्ववत्स्यात्[8] शृणुष्वा[9]ङ्गादिकल्पनाम् ।
षड्दीर्घकालीबीजेन षडङ्गानि क्रमाच्चरेत् ॥ १८ ॥
ततो ध्यायेन्महाविद्यां[10] कुरुकुल्लां कुले[11]श्वरीम् ।
शवोपरि समासीनां मुण्डमालाविभूषिताम् ॥ १९ ॥
कपालकर्तृकाहस्तां खड्गखेटकधारिणीम् ।
अञ्जनाद्रिनिभां दिव्यां मुक्तकेशी चतुर्भुजाम् ॥ २० ॥
पीनोन्नतकुचद्वंद्वां[12] पीनवक्षो नितम्बिनीम् ।
भक्तानंदकरोद्युक्ता साधकाभीष्टदायिनीम् ॥ २१ ॥
आसवाघूर्णनयनां कामिनी[13] जनमोहिनीम् ।
एव संचितयेद्देवी कुरुकुल्लां महोदयाम् ॥ २२ ॥
एवं ध्यात्वा जपेल्लक्षसंख्यं[14] त्रिमधुरान्वितैः ।
होमयेद्बिल्वपत्रैश्च बिल्वपुष्पैरपि प्रिये ॥ २३ ॥
दशांशं तर्पणं कुर्यात्तद्दशांशेन मार्जनम् ।
तद्दशांशं विप्रभोज्यं तेन सिद्धो मनुर्भवेत् ॥ २४ ॥
पूजयेत्कालिका[15]पीठे त्रिकोणत्रयसोज्ज्वले ।
वृत्ताष्टदलभूषाढ्ये भूपुरद्वयशोभिते ॥ २५ ॥
बिंदौ बीजं लिखेत्काल्यास्त्रिशक्तित्रयमर्चयेत् ।
काली तारां छिन्नमस्तां बालाम्बां[16] बगलां रमाम् ॥ २६ ॥
[17]उग्रगर्भामुग्रबीजामुग्रवीर्यां तृतीयकाम्[18] ।
त्रिकोणत्रितये पूजा[19] क्रमेण परिकीर्तिता ॥ २७ ॥

---

1. C ह्री° । 2. D °मैहा° । 3. N omits this line. 4. CN °ल्° । 5. B °पा । 6. CN मनुर्दिष्टः । 7. B च । 8. B वक्ष्यामि । 9. D सुरेखा° । 10. N महेशानि; C देवि । 11. CN मह्रे° । 12. B °द्वाढ्यां । 13. CN °नी° । 14. N °ह्या° । 15 CN °का° । 16. B °ळां वा । 17. C omits this line. 18. D reads सम्पूज्य च तृतीयके । 19. D °ज्य । *The restoration of the Mantra is given in D as क्रीँ ओँ कुरुकुल्ले क्रीँ ह्रीँ मम सर्वजनवशं कुरु कुरु कुरुकुल्ले स्वाहा ।

ब्रह्माद्यष्टौ भैरवां[1]श्च पूजयेत् द्वि[2]दलाष्टके ।
लोकपालास्तदस्त्रान्ता[3]न्पूजयेत्परमेश्वरि ॥ २८ ॥

श[4]वे श्मशाने विपिनेऽरण्ये च[5] भूतसंकुले ।
पूजयेत्कुरुकुल्लां च सर्वसिद्धिं स विन्दति ॥ २९ ॥

यद्यत्प्रार्थयते चित्ते तत्तदाप्नोति साधकः ।
समस्तान् पूजयेद्देवि ब्राह्मणांश्च सुवासिनीम् ॥ ३० ॥

विप्राराधनमात्रेण किं तद्यन्न करे स्थितम् ।
तण्डुलेन जयावाप्तिर्गोधूमेन धनागमः ॥ ३१ ॥

माषैः शत्रुमृतिं याति[6] मुद्गैर्मोक्षफलं[7] लभेत् ।
तिलतण्डुलहोमेन महाप्रीतिं स विंदति ॥ ३२ ॥

राजी[8]लवणहोमेन कामिनी कर्ष[9]येद् ध्रुवम् ।
सर्षपैर्लवणैर्देवि कामिनीमानम[10]ञ्जनम् ॥ ३३ ॥

सर्पिर्लवणहोमेन कामिनीमनोरञ्जनम् ।
हरिद्रया द[11]रिद्राणि नश्यन्त्येव न संशयः ॥ ३४ ॥

इति संक्षेपतः प्रोक्तः कुरुकुल्लाविनिर्णयः ।
रहस्यातिरहस्यं च[12] किं भूयः[13] श्रोतुमिच्छसि ॥ ३५ ॥

**श्रीदेव्युवाच ।**

विरोधिनीविधिं ब्रूहि यद्यहं तव वल्लभा ।

**श्रीशिव उवाच ।**

रहस्यादतिगोप्यं हि नित्या प्रोक्ता विरोधिनी ॥ ३६ ॥

पञ्चमीसंज्ञ[14]का नित्या यथावदवधारय ।
प्रणवं पूर्वमुद्धृत्य कालीप्रणवमुद्धरेत् ॥ ३७ ॥

मायां कामं ततः कूर्चं प्रोक्त्वा[15] विरोधिनीपदम् ।
[16]शत्रूनुच्चाटयपदं[17] विरोधय[18]द्वयं वदेत्[19] ॥ ३८ ॥

शत्रुक्षयकरी प्रोच्य हूं फट् स्वाहान्वितो[20] मनुः * ।
द्वात्रिंशद्वर्णसंयुक्तो मन्त्रराजो महो[21]त्तमः ॥ ३९ ॥

महामन्त्रोऽयमाख्यातो ऋषिर्भैरव ईरितः ।
गायत्री छन्द आदिष्ट[22] देवता तु विरोधिनी ॥ ४० ॥

---

1. B वा° । 2. B °येद्वि° । 3. D °स्त्राश्च । 4. C शं° । 5. D अरण्ये । 6. B °मीरयति । 7. B मुद्रै मेक्षि कलां । 8. B एती । 9. D वश° । 10. D मनर° । 11. B ह° । 12. B तत् । 13. D किमन्यत् । 14. BN °ज्ञि° । 15. B °क्तो; C °क्ता । 16. C पद श° । 17. C °येति । 18. C °यद् । 19. CN भवेत् । 20. C न्तको । 21. D °त्तमो° । 22. B °ष्टो ।
*The restoration of the Mantra is given in D as follows–ओं क्रीं ह्रीं क्लीं हूं विरोधिनी शत्रूनुच्चाटय विरोधय विरोधय शत्रुक्षयकरी हूं फट् ।

कालीबीजं बीजमस्याः माया[1] शक्तिः प्रकीर्तिता ।
कामबीजं कीलकं स्या[2]द्विनियोगो यथेच्छया ॥ ४१ ॥
कालीषड्[3]दीर्घबीजेन षडंगयुग्ममाचरेत् ।
ध्यायेदञ्जनगिरिनिभां द्विरष्टवर्षदेशिनीम् ॥ ४२ ॥
पीनोन्नतकुचद्वंद्वा सर्पास्थिमालिकायुताम् ।
चतुर्भुजां त्रिनयनां शवपद्मोपरि स्थिताम् ॥ ४३ ॥
त्रिशिखं नागपाशं च घण्टां च डमरुं तथा ।
संबिभ्रती महादेवी[4] क्रमाद्भुजचतुष्टये ॥ ४४ ॥
धूम्राम्बरां[5] पीतगात्री[6]मीषत्प्रहसिताननाम् ।
मा भैर्वीर वरं ब्रूहि सर्वं तत्ते ददाम्यहम् ॥ ४५ ॥
उपस्थितं तु यत्कार्यं तत्तत्कार्यं करोम्यहम् ।
एवं संवदती देवी चारुहासा[7] मनोहराम् ॥ ४६ ॥
विरोधकरणोद्युक्ता[8] शत्रूणां नाशकारिणीम् ।
कालिकोक्ते यजेत्पीठे त्रिकोणत्रयशोभिते ॥ ४७ ॥
वृत्ताष्टदलभूषा[9]ढ्ये भूपुरैकेन शोभिते ।
चतुर्द्वारविभूषाढ्ये श्रीबीजोज्वलकर्णिके ॥ ४८ ॥
विरोधिनी कर्णिकायां त्रिकोण[10]त्रितये क्रमात् ।
धूम्रार्चिरूष्म[11]ज्वालिनी ज्वालिनीं विस्फुलिंगिनीम् ॥ ४९ ॥
सुश्री सुरूपां कपिलां ततो हव्यवहां यजेत् ।
विरोधिनीमस्तके तु ततो हि दशमीं[12] यजेत् ॥ ५० ॥
दलाष्टके भैरव्यष्टौ भैरवेण समन्विताः ।
भूपुरे लोकपालाश्च तदस्त्राणि च तद्बहिः ॥ ५१ ॥
ततो नीराजनं कृत्वा लक्षसंख्यं जपेन्मनुम् ।
दशांशं जुहुयाद्वन्हौ निम्ब[13]वन्हौ यथाविधि ॥ ५२ ॥
अरिष्टमाला कृ[14]त्वा च महामुंडासनो[15]नरः ।
जुहुयादरिनाशाय अरिष्टफलमादरात् ॥ ५३ ॥
बिभीतकेन जुहुयात्सर्वशत्रुनिबर्हणम् ।
धत्तू[16]रकुसुमैर्होमात् शत्रून् विद्वेषयेन्नरः ॥ ५४ ॥
काकोलूकस्य मांसेन शत्रुं मारयति क्षणात् ।
राजवृक्षप्रसूनैश्च तत्काष्ठाग्नौ हुनेत्सुधीः ॥ ५५ ॥

1. B मण° । 2. DN बीजमस्या । 3. C °शं । 4. B °वि । 5. D °म्रां परां । 6. B °त्रा° । 7. CN °सी । 8. B °णे प्रोक्तो । 9. D शोभा° । 10. B °ण° । 11. N पुष्पा; C °ष्मां । 12. C °मं । 13. B निम्ब° । 14. D हु° । 15. DN °नी । 16. CD धुस्तू° ।

विरोधिनी भवेत्सिद्धा धूमावत्यादिसंयुता ।
अर्काद्यादि[1]समायुक्ता शत्रुविद्वेषकारिणी ॥ ५६ ॥

वायव्याभिमुखो भूत्वा कटुजीरकजं जलम् ।
कोष्णं पिबे[2]न्महेशानि शत्रुज्वरयुतो भवेत् ॥ ५७ ॥

पराभिचारनाशार्थं स्वरक्षार्थं यथाविधि ।
एकान्ते मातृगेहे वा[3] मृतहट्टे शिवालये ॥ ५८ ॥

विरोधिनी जपेद्विद्यां ह्ययुतं चो[4]क्तमार्गतः ।
बिभीतकस्य समिधो[5] हुनेच्छत्रुनिवारणम् ॥ ५९ ॥

नाभिमात्रोदके गत्वा मरीचजलयोगतः ।
तर्पयेद्देवतां नीरैस्त्रैलोक्यद्वेषणं चरेत् ॥ ६० ॥

अथाकर्षणमन्विच्छन्वल्मीकमृत्समानयेत् ।
श्मशानमृत्समादाय गोधूमहिंगुजीरकैः ॥ ६१ ॥

पुत्तलीं साध्यरूपां च कारयेत्परमेश्वरि ।
नासायां डो[6]रकं दत्वा प्राणस्थापनपूर्वकम् ॥ ६२ ॥

विरोधिनीं जपेत्तत्र करवीरैः समर्चयेत् ।
दुग्धेन पुत्तलीं कृत्वा तापयेत्खदिरानले ॥ ६३ ॥

अनेन क्रमयोगेन दिनानि तु चतुर्दश ।
यः करोति नरः श्रेष्ठः सर्वाकर्षणकारकः ॥ ६४ ॥

वनितां मदगर्वाढ्यां समाकर्षति योगतः ।
विचार्याकर्षणं कार्यं भवेद्वा न भविष्यति ॥ ६५ ॥

ध्यात्वा साध्यगले पाशं मस्तके ज्व[7]लिताङ्कुशम् ।

एवं सं[8]चिन्त्य देवेशि त्रैलोक्याकर्षको भवेत् ।
इति संक्षेपतः प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ॥ ६६ ॥

इति श्रीशक्तिसङ्गममहातन्त्रराजे उत्तरभागे तृतीयखण्डे श्रीमदक्षोभ्यमहोग्रतारासंवादे
विरोधिनीविधिर्नाम चतुर्दशः पटलः ।

---

1. C अर्कज्योति; B अवयादि; N अर्कघोंदि; । 2. D सेवे° । 3. D एकान्तगेहे देवेशि
4. D प्रो° । 5. C संसिद्धात् । 6. B दो° । 7. B क° । 8. D वि° । 9. B त्रयोदशः ।

## पञ्चदशः पटलः।

**श्रीदेव्युवाच।**

देवेश श्रोतुमिच्छामि विप्रचित्ता[1]विधानकम्[2]।
कथयस्व महादेव[3] यद्यहं तव वल्लभा ॥ १ ॥

**श्रीशिव उवाच।**

[4]रहस्यमपि देवेशि तव प्रीत्या निगद्यते।
विप्रचित्तातिदुष्टानां वधार्थं पूर्वमुद्यता[5] ॥ २ ॥

विप्रचित्तेति विख्याता वैप्रचित्तविनाशिनी।
षष्ठी नित्या महाविद्या तन्मंत्रं शृणु पार्वति ॥ ३ ॥

प्रणवं कमला कामं चामुण्डेपद[6]मुच्चरेत्।
विप्रचित्ते पदं प्रोच्य दुष्टघातिनि[7] चोच्चरेत् ॥ ४ ॥

शत्रून्नाशय[8] चोच्चार्य एतद्दिनावधि प्रिये।
सिद्धिं मे देहि चोच्चार्य हुँ फट् स्वाहांतगो मनुः* ॥ ५ ॥

चतुस्त्रिंशद्वर्णयुतो विप्रचित्तामनुर्महान्।
ईश्वरोऽस्य ऋषिर्देवि जगती छंद ईरितम् ॥ ६ ॥

विप्रचित्ता[9] देवता हि चामुण्डा बीजमीरितम्।
कमला शक्तिराख्याता कामबीजं तु कीलकम् ॥ ७ ॥

षड्दीर्घाढ्येन कामेन षडंगन्यासमाचरेत्।
सिंहोपरि समारूढां शवपञ्जर[10]मध्यगाम् ॥ ८ ॥

चतुर्भुजां त्रिनयनां[11] पीनोन्नतपयोधराम्।
दिगंबरां मुक्तकेशीं ललज्जिव्हां भयानकाम् ॥ ९ ॥

भीमदंष्ट्रां करालास्यां सृक्कि[12]णीरक्तवाहिनीम्।
खड्गमुण्डकपालत्रिशूलहस्तां महोदरीम् ॥ १० ॥

नीलोत्पलनिभां श्यामां भक्तानुग्रहकारिणीम्।
दैत्यसंहरणोद्युक्तां साधकानामभीतिदाम् ॥ ११ ॥

एवं संचित्य देवेशि विप्रचित्तां[13] शिवप्रियाम्।
लक्षमात्रं जपेन्मंत्रं दशांशं कुसुदै[14]र्हुनेत् ॥ १२ ॥

---

1. N °त्रा। 2. D reads अधुना श्रोतुमिच्छामि विप्रचित्ता सदाशिव. 3. D समासेन वदेशान। 4. D reads differently as शृणु वक्ष्यामि देवेशि विप्रचित्तां मनोहराम्। या जाता चैव शत्रूणां। 5. CN °द्धृ°। 6. DN °राव°। 7. D कृष्णज्योतिनि। 8. B °न् जंभय। 9. N °त्रा। 10. D °पञ्चक°। 11. N °नी। 12. D °क्क°। 13. N °न्तां। 14. D कुसुमै°।

* **The Mantra** should be restored as ओं श्रीं क्लीं चामुण्डे विप्रचित्ते दुष्टघातिनि शत्रून्नाशय-एतद्दिनावधि प्रिये सिद्धिं मे देहि हूं फट् स्वाहा।

अथाष्टगंधनीरेण तद्दशांशं प्रतर्पयेत् ।
मार्जनं तद्दशांशेन दशांशेनाभिषेचनम् ॥ १३ ॥
तद्दशांशं विप्रभोज्यं विप्रचित्तासु[1]सिद्धये ।
त्रिकोणं वृत्तषट्कोणं वृत्ताष्टदलभूषितम् ॥ १४ ॥
वृत्तभूपुरसंयुक्तं बिंदुबीजविभूषितम् ।
बिंदौ यजेद्विप्रचित्तां त्रिकोणे त्रिगुणा[2] यजेत् ॥ १५ ॥
षट्कोणे तु षडंगानि तद्दले मातृभैरवौ[3] ।
भूपुरे लोकपालाश्च तदस्त्राणि च तद्बहिः ॥ १६ ॥
ततो नीराजनं कृत्वा जपं देव्यै समर्प[4]येत् ।
पुरश्चर्यासमायुक्तः प्रयोगार्हो न चान्यथा ॥ १७ ॥
साकल्यैर्जुहुयाद्देवि शांतिकर्मणि साधकः ।
मालत्या[5] जुहुयाद्वश्ये केतक्या वाग्विभूतये ॥ १८ ॥
करवीरैर्वशीकारः किंशुकैः स्तंभनं भवेत् ।
मोहनं चो[6]डूपुष्पेण[7] धत्तू[8]रैर्मारणं दिशेत् ॥ १९ ॥
बृह[9]त्या तु रिपूच्चाटो[10] गिरिकर्ण्या धनागमः ।
काशपुष्पै रिपूच्चाटो विद्वेषो कर्णिकारजैः ॥ २० ॥
नीवारैर्जुहुयाद्देवि धान्यसिद्ध्य[11]र्थमेव हि ।
कलायपुष्पैर्जुहुयात्ततः स्युः[12] सर्वसंपदः ॥ २१ ॥
कौसुंभकुसुमैर्देवि कामिनीं वांछितां लभेत् ।
मधुपु[13]ष्पैश्च जुहुयादभीष्टसिद्धये ध्रुवम् ॥ २२ ॥
धातक्या जुहुयाद्देवि धनधान्य[14]पतिर्भवेत् ।
यद्रोगे भेषजं यच्च तेन तद्रोगनाशनम् ॥ २३ ॥
इति संक्षेपतः प्रोक्तो विप्रचित्ताविनिर्णयः ।

**श्रीदेव्युवाच ।**

देवेश श्रोतुमिच्छामि उग्रानित्याविनिर्णयम् ॥ २४ ॥

**श्रीशिव उवाच ।**

रहस्यातिरहस्यं च तथापि कथ्यते शृणु
प्रणवं च वधूबीजं हूँबीजं भुवनां[15] ततः ॥ २५ ॥
पुनः पूर्वं ततो हूँ फट् उग्रा सप्ताक्षरो मनुः । *
भैरवोऽस्य ऋषिः प्रोक्तो बृहती छंद ईरितम् ॥ २६ ॥

---

1. C तु । 2. B °नं । 3. C °वै । 4. B °र्च° । 5. C °नसा । 6. C चोड्र° । 7. D °ष्पैश्च । 8. D °धुस्तूरै° । 9. B बहु° । 10. C °रे । 11. C °द्धा° । 12. BD °स्तः स्यात् । 13. D °कु° । 14. CDN धनैर्धन° । 15. B °नात्त° । * The MS D restores the Mantra as ओं स्त्रीं हूं ह्रीं हूं फट् in seven letters.

[1]उग्रा तु सप्तमी नित्या देवता परिकीर्तिता ।
कूर्चं बीजं च फट् शक्तिर्वधू: कीलकमीरितम् ॥ २७ ॥
सर्वाभीष्टादिसिद्ध्यर्थे विनियोगः प्रकीर्तितः ।
षड्दीर्घाढ्येन बी[2]जेन मायाख्येन षडंगकम् ॥ २८ ॥
ततो ध्यायेत्परामुग्रां प्रत्यालीढपदस्थिताम् ।
चतुर्भुजां त्रिनयना मुण्डमालाविभूषिताम् ॥ २९ ॥
दिगम्बरां करालास्यां घोरदंष्ट्रां भयानकाम् ।
शवोत्संगे क्रीडमाना श्मशानालयवासिनीम् ॥ ३० ॥
श्यामवर्णां मुक्तकेशी खड्गेन्दीवरधारिणीम् ।
कपालकर्तृकाहस्तां वरदानपरायणाम् ॥ ३१ ॥
उग्रां ध्यायेन्महाविद्यां लक्षयुग्मं जपं चरेत् ।
तद्दशांशेन जुहुयात्कमलैर्घृतसंयुतैः ॥ ३२ ॥
तद्दशांशं तर्पणं च तद्दशांशं च मार्जनम् ।
विप्रभोज्यं दशांशेन तेनो[3]ग्रा सिद्धिदा[4] ध्रुवम् ॥ ३३ ॥
पर्वते प्रांतरे घोरे विपिने तटिनीतटे ।
एकलिंगे श्मशाने वा पुरश्चरणवान्भवेत् ॥ ३४ ॥
अथास्याः पूजायंत्रं च[5] यथावत्कथ्यते शृणु ।
त्रिकोणं वृत्ताष्टदल वृत्तभूपुरभूषितम् ॥ ३५ ॥
[6]शू[7]लाष्टकविभूषाढ्यं किंवा वज्रविभूषितम् ।
त्रिकोणमध्ये विलिखेत्कूर्चबीजं महोत्तमम् ॥ ३६ ॥
तारां नीलामेकजटां तत् त्रिकोणे प्र[8]पूजयेत् ।[9]
ततो[10] दलाष्टके देवि उग्राघोराष्टकं यजेत् ॥ ३७ ॥
वैरोचनाष्टकं पूज्य ततः पद्मान्तकान्[11] यजेत्[12] ।
लोकपालान्तदस्त्राणि यथावद्विधिना यजेत् ॥ ३८ ॥
ततो नीराजनं कृत्वा जपं देव्यै समर्प्य च[13] ।
शवासने वा * * * संस्थित्वा सर्वदा जपेत् ॥ ३९ ॥
सिंदूरतिलको नित्यं संविदासवघूर्णितः ।
मुक्तकेशो दिशावासो भक्तभक्तो जितेंद्रियः ॥ ४० ॥
महाचीनद्रुमलतां संपाद्य[14] परमेश्वरि ।
[15]तत्त्रिकोण च संवीक्ष्य सदा तद्गतमानसः ॥ ४१ ॥

---

1. B omits two lines. 2. D व्यस्ववी° । 3. C ततो° । 4. B °ध्यति । 5 C पूजनं यन्त्रं । 6. D omits this line. 7. B द° । 8. B °णेषु । 9. D adds after this ततो देवि जपं कृत्वा जपं देव्यै समर्प्य च । 10. D वाह्ये । 11. D °ष्टकं । 12. CDN न्यसेत् । 13. C °र्पयेत् । 14. D °पूज्य । 15. D omits three lines.

लक्षमात्रं जपेन्मंत्रं उग्रा सिद्ध्यति निश्चितम् ।
अन्यत्सर्वं तु तारावत्कीर्तितं जगदीश्वरि ॥ ४२ ॥

न्यासपूजादिकं ध्यानं पुरश्चर्याविधानकम् ।
महोग्रतारावज्ज्ञे[1]यं किं भूयः श्रोतुमिच्छसि ॥ ४३ ॥

श्रीदेव्युवाच ।

देवेश श्रोतुमिच्छामि नित्यामुग्रप्रभाभिधाम् ।
अष्टमी शुभदा नित्या नित्यानंदकरां वराम ॥ ४४ ॥

श्रीशिव उवाच ।

प्रणवं पूर्वमुद्धृत्य शिवबीजं समुद्धरेत् ।
वन्हया[2]रूढ नादबिंदुं षष्टस्वरविभूषितम् ॥ ४५ ॥

बीजद्वयं समुच्चार्य उग्रप्रभेस्वरूपकम् ।
देवि कालि महादेवि[3] स्वरूपं दर्शयेति च ॥ ४६ ॥

हूं फट् स्वाहासमायुक्तः प्रोक्तस्तूग्रप्रभामनुः * ।
पंचविंशतितत्त्वाढ्यः प्रोक्तश्चोग्रप्रभामनुः ॥ ४७ ॥

महाकालो ऋषिः प्रोक्तस्त्रिष्टुप् छंदः प्रकीर्तितम ।
उग्रप्रभामहाकाली देवता परिकीर्तिता ॥ ४८ ॥

[4]हूं बीजं ॐ तथा शक्तिः फट् कीलकमुदाहृतम् ।
कालिकादर्शनाद्यर्थे विनियोगः प्रकीर्तितः ॥ ४९ ॥

उग्रप्रभाख्य[5]बीजेन षड्दीर्घेण षडंगकम् ।
ध्यायेदुग्रप्रभां दिव्यां दिव्यनीलोत्पलप्रभाम् ॥ ५० ॥

चतुर्भुजां त्रिनयनां शवपद्मोपरिस्थिताम् ।
दिगंबरां मुक्तकेशीं पीनोन्नतपयोधराम् ॥ ५१ ॥

सुप्रसन्नमुखांभोजां शवमांसप्रभोजनीम् ।
शवानां[6] करसंघातैः कृतकांची हसन्मुखीम् ॥ ५२ ॥

खड्गमुण्डधरां वामे दक्षे खर्परकर्तृके[7] ।
बिभ्रतीं परमाल्हादजननी कालवंच[8]नीम् ॥ ५३ ॥

एवं ध्यात्वा महाविद्यां लक्षयुग्मं जपेच्छिवे ।
कालिकोक्ते यजेत्पीठे त्रिकोणद्वयसोज्वले ॥ ५४ ॥

वृत्ताष्टदलभूषाढ्ये भूपुरद्वयभूषिते ।
उग्रप्रभाबिंदुमध्ये कालीं तारां च रोचनीम् ॥ ५५ ॥

---

1. N °द्रक्षे° । 2. B वासना° । 3. D °कालि । 4. B हूं° । 5. B °ल्या° । 6. C शम्भूनां । 7. D °का । 8. C °चि°; D रञ्जि° । * The Mantra may be restored as follows ओं हूं हू उग्रप्रभे देवि कालि महादेवि स्वरूपं दर्शय हूं फट् स्वाहा ।

प्रथमे पूजये[1]द्देवीं द्वितीये तारिणीगणाः[2] ।
तारामेकजटा नीलां द्वितीये तु त्रिकोणके ॥ ५६ ॥
दलाष्टके मातृकाष्टौ दलाग्रे भैरवाष्टकम् ।
भूपुरे लोकपालाश्च तदस्त्राणि च तद्बहिः ॥ ५७ ॥
त्रिभिः पूजा प्रकर्तव्या सर्वेषामपि देशिकैः ।
एवमुग्रप्रभामिष्टां[3] लक्षयुग्मं जपं चरेत् ॥ ५८ ॥
दशांशं वज्रपुष्पाणि मैरे[4]याक्तानि होमयेत् ।
तर्पयेत्तद्दशांशेन दुग्धेन[5] मधुनाथ वा ॥ ५९ ॥
दध्ना चेक्षुरसेनापि पीठतोयेन वा पुनः ।
तद्दशांशं मार्जनं च[6] दशांशं विप्रभोजनम् ॥ ६० ॥
कुमारी पूजयेत्पश्चाच्छक्ति चा[7]पि प्रपूजयेत् ।
उग्रप्रभापताकायां मूर्तिं कृत्वा विधारयेत् ॥ ६१ ॥
रणे देवासुरान् जित्वा त्रैलोक्यविजयी भवेत् ।
दुंदुभौ फलके[8] खड्गे जप्त्वा चोग्र[9]प्रभा शिवाम् ॥ ६२ ॥
सर्वसिद्धि समासाद्य कालीरूपो नरो भवेत् ।
मानिनीमण्डलं दृष्ट्वा जपेदुग्रप्रभामनुः ॥ ६३ ॥
कालिका सिद्धिदा भूयान्नात्र कार्या विचारणा ।
* * * लिख्य[10]जपेदुग्रप्रभा पराम् ॥ ६४ ॥
तत्र संचिन्त्य देवेशि साधकः किन्न साधयेत् ।
उग्रप्रभाख्यां काली तु भु[11]क्त्वा मां[12]सं जपेच्छिवे ॥ ६५ ॥
मासमात्रप्रयोगेण कालिका वरदा भवेत् ।
इति संक्षेपतः प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ॥ ६६ ॥

इति श्रीशक्तिसङ्गमहातन्त्रराजे उत्तरभागे तृतीयखण्डे श्रीमदक्षोभ्यमहोग्रतारासंवादे उग्रप्रभानित्याविधिर्नाम[13] पञ्चदशः[14] पटलः ।

1. C प्रजपे°; N प्रयजे° । 2. B °गणं । 3. DN °भिष्टां । 4. CN °दे° । 5. B जलेन । 6. D अभिषेकं तद्दशांशं । 7. CN वा° । 8. B लगुडे । 9. C विप्र° । 10. CN ° त्वा । 11. CN कृ° । 12. CN मा° । 13. B नित्यामुग्राभिधा नाम । 14. B चतुर्दशः ।

## षोडशः पटलः ।

**श्रीदेव्युवाच ।**

देवेश श्रोतुमिच्छामि रहस्यातिरहस्यकम् ।
तन्मे कथय देवेश दीप्तानित्याविधान[1]कम् ॥ १ ॥

**श्रीशिव उवाच ।**

पू[2]र्वतंत्रेषु संगुप्ता दीप्तानित्या महोदया ।
नवमीसंख्यका नित्या सारात्[3]सारा[4] महोदया ॥ २ ॥

तस्या मंत्रं प्रवक्ष्यामि यथावदवधारय ।
प्रणवं कालीकाबीजं कौलिनीबीजमेव च ॥ ३ ॥

कूर्चबीज समुद्धृत्य दीप्तायै तदनन्तरम् ।
सर्वमंत्रफल प्रोच्य दायै शब्दं[5] समुच्चरेत् ॥ ४ ॥

हुं फट् स्वाहान्तको मंत्रस्तूनविंशाक्षरः परः* ।
अर्ध[6]संख्याविहीनेन वीतिसंख्यः प्रकीर्तितः ॥ ५ ॥

महादेव ऋषिश्चास्य उष्णिक् छन्दः प्रकीर्तितम् ।
दीप्ताख्या नवमी नित्या देवता परिकीर्तिता ॥ ६ ॥

कालीबीजं बीजमस्याः कौलि[7]नी शक्तिरेव हि ।
स्वाहा कीलकमित्युक्तं काल्यर्थे विनियोगता ॥ ७ ॥

काल्याः षड्दीर्घयुक्तेन षडंगन्यासमाचरेत् ।
ध्यायेद्दीप्तां महानीलमणिप्रख्या महोदरीम् ॥ ८ ॥

चतुर्भुजां त्रिनयना मुण्डमालाविभूषिताम् ।
[8]दिगम्बरां मुक्तकेशीं घोरदंष्ट्रा करालिकाम ॥ ९ ॥

शवपद्मे समासीनां पीनोन्नतपयोधराम् ।
शवास्थिकृतकेयूरशंखकङ्कणभूषिताम् ॥ १० ॥

लेलिहाना शवं क्वापि प्रहसन्ती मदातुराम् ।
भक्ताना वरदां नित्यां कालीकोद्योतकारिणीम्[9] ॥ ११ ॥

नरान्त्रयोगपट्टेन भूषितां योगमार्गगाम्[10] ।
खड्गमुण्डधरा वामे सव्येऽभयवर[11]प्रदाम् ॥ १२ ॥

सुदन्तुरां महारौद्री श्मशानालयवासिनीम् ।
एवं संचिन्त्य दीप्ताम्बां लक्षमेकं जपेच्छिवे ॥ १३ ॥

---

1. D °य° । 2. CN स° । 3. B नित्या° । 4. D वा । 5. B शेषं । 6. C मूर्ध्नि । 7. C °कि° । 8. C omits three lines. 9. B °कां घोररावि़णीं । 10. C गणसेवनं । 11. D वराभय° । * The Mantra is restored in D as under ओं क्रीं हूं दीप्तायै सर्वमन्त्रफलदायै हूं फट् स्वाहा ।

दशांशं करवीरेण[1] हवनं समुपाचरेत् ।
कदल्या हवनं कार्यं सर्वदीप्तिप्रसिद्धये ॥ १४ ॥
दशांशं पीठतोयेन हवनं समुपाचरेत् ।
तद्दशांशं मार्जनं च गंधाष्टकजलेन वै ॥ १५ ॥
तद्दशांशं विप्रभोज्यं भोजयेद्धि कुमारिकाम् ।
ततः सिद्धमनुर्मन्त्री प्रयोगार्हो न चान्यथा ॥ १६ ॥
ब्राह्मे मुहूर्ते चोत्थाय गुरुस्मरणपूर्वकम् ।
गुरुं ध्यात्वा सहस्रारे पूर्वोक्तध्यानयोगतः ॥ १७ ॥
मूलाधारात्स्वजिव्हान्तं मूलविद्या परां स्मरेत् ।
सरस्वती दीप[2]रूपां मूलबीजस्वरूपिणीम् ॥ १८ ॥
संपूर्णा मातृकां प्रोच्य मूलविद्या समुच्चरेत् ।
पुनर्वै मातृकां प्रोच्य पुनर्विद्यां समुच्चरेत् ॥ १९ ॥
त्रिधाभिमंत्र्य तोयं तु क्रमेणानेन[3] सुन्दरि ।
मूलविद्यां ततो ध्यात्वा जिव्हायां दीपरूपिणीम् ॥ २० ॥
तेजोरूपां सायुधा वै तज्जलं तु पिबेच्छिवे ।
योगेनानेन देवेशि त्रिकालज्ञो नरो भवेत् ॥ २१ ॥
विना न्यासैर्विना ध्यानै[4]र्विना पाठादि[5]ना शिवे ।
चतुर्विधं तु पाण्डित्यं तस्य हस्ते व्यवस्थितम् ॥ २२ ॥
जातीपुष्पेण देवेशि कविता वशवर्तिनी ।
कुन्दपुष्पेण देवेशि सर्वशास्त्र[6]वशीकृतिः[7] ॥ २३ ॥
दूर्वया शान्तिको होमो गुडुच्या मृत्युवारणम्[8] ।
सु[9]रया मोहनं प्रोक्तं जम्बा[10] स्तम्भनमीरितम् ॥ २४ ॥
आम्रेण वश्यसिद्धिः स्यादम्बुजेन[11] महोदयः[12] ।
उच्चाटनं करीषे[13]ण विद्वेषः कर्कटीफलैः ॥ २५ ॥
मारणं नील[14]पुष्पेण मरीचेन तु कर्षणम् ।
एवमादिक्रियाः सर्वाः सिद्धमन्त्री समाचरेत् ॥ २६ ॥
अञ्जनं गुटिका खड्गो[15] धातुवादो रसायनम् ।
चरुकं तिलकं वा[16]सो दुन्दुभिश्च कपालकम् ॥ २७ ॥
एवमादिक्रियासिद्धि[17]र्दीप्तामन्त्रेण वै भवेत् ।
इति संक्षेपतः प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ॥ २८ ॥

---

1. CN नारिकेलेन । 2. D °स° । 3. D °न्येन । 4. CD °न्यासैः । 5. CN °द्वि° । 6. D जगत्सर्वं । 7. B कविः । 8. B °णे । 9. CN पु° । 10. CN जह्वा । 11. N बर्बूलेण; D कर्पूरेण । 12. B °दर. । 13. B °र° । 14. B नालि° । 15. D सिद्धिः । 16. B रा, C चासौ । 17. D शक्ति° ।

**श्रीदेव्युवाच ।**

देवेश श्रोतुमिच्छामि नीलाविद्याविधानकम् ।
नीला नीलस्वरूपा हि महानीलसरस्वती ॥ २९ ॥
तस्या विधानं संब्रूहि यद्यहं तव वल्लभा ।

**श्रीशिव उवाच ।**

मंत्रोद्धारं शृणु प्राज्ञे येन सिद्धिं स विन्दति ॥ ३० ॥
कूर्चयुग्मं महादेवि कालीबीजद्वयं तथा ।
मायाद्वयं समुद्धृत्य हसबलमरी स्वरूपकम् ॥ ३१ ॥
अथ नीलपताके च हुं फडंता[1] महेश्वरि * ।
नीला नीलपताकेयं[2] सर्वसिद्धिकरी परा ॥ ३२ ॥
उग्र[3]चण्डा ललज्जिव्हा या सा सिद्धि[4]करालिका ।
पंचधा कथिता नीला महानीलपताकिका ॥ ३३ ॥
भैरवोऽस्य ऋषिः प्रोक्तो बृहती छन्द ईरितम् ।
[5]देवता दशमी नित्या महानीलपताकिका ॥ ३४ ॥
कूर्चबीजस्वरूपं हि शक्तिरित्यभिधीयते ।
हूं फट् च कीलकं भद्रे[6] कालयर्थे विनियोगता ॥ ३५ ॥
कालीषड्दीर्घबीजेन षडंगन्यासमाचरेत् ।
अथ ध्यायेन्महानीलां नीलाजनगिरिप्रभाम् ॥ ३६ ॥
चतुर्भुजां त्रिनयना मुण्डमालाविभूषिताम् ।
शवोपरि समासीना मदिराघूर्णलोचनाम् ॥ ३७ ॥
मृगशावकनेत्रां च प्रसन्नवदनाम्बुजाम् ।
करकांचीशोभमानां शवकर्णावतंसि[7]नीम् ॥ ३८ ॥
ललज्जिव्हां करालास्या घोरदंष्ट्रां भयानकाम् ।
पापिनां[8] सर्वदा नीलां क्रूरां पुण्यवता वराम् ॥ ३९ ॥
दुष्टसंहरणोद्युक्तां साधकस्य वरप्रदाम् ।
फेरुवर्गैर्गृध्रगणैश्चतुर्दिक्षु निनादिनीम्[9] ॥ ४० ॥
ईदृशीमादिरूपां तां नीलाभोजवनप्रभाम् ।
जपेल्लक्षत्रय देवि हविष्याशी[10] जितेन्द्रियः ॥ ४१ ॥
कुलाचारक्रमेणैव यथोक्तक्रमयोगतः ।
करवीरैर्जवा[11]बिल्वैर्मल्लिकाद्यैर्वृतान्वितैः ॥ ४२ ॥

---

1. C फट् स्वाहा । 2. C च । 3. B °क्र° । 4. N °द्ध° । 5. CDN omit this line which seems to be necessary. 6. N °द्र° । 7. D °शि° । 8. D दीपिनीं । 9. CDN °तां । 10. N °हस्ता । 11. B °पा° । * The Mantra is restored in D as हूं हूं क्रीं क्रीं ह्रीं ह्रीं हसबलमरी नीलपताके हूं फट् ।

त्रिकोणकुण्डे जुहुयात्सुपरिष्कृतभूतले।
दशांशं तर्पणं कार्यं दुग्धेन सुरयाऽपि च ॥ ४३ ॥
मार्जयेद्रक्तनीरैश्च ब्राह्मणान्भोजयेत्ततः।
सुवासिनी कुमारी च शक्ति वा[1] त्रितयां शुभाम् ॥ ४४ ॥
पुरश्चरणसम्पन्नो मंत्रः सर्वार्थदाय[2]कः।
यथाद्रव्यं नृपादीना पुरश्चर्या तु मंत्रिणाम् ॥ ४५ ॥
पुरश्चरणसंपन्नः प्रयोगार्हो न चान्यथा।
यंत्रमस्याः प्रवक्ष्यामि येन सिद्धीश्वरो भवेत् ॥ ४६ ॥
बिंदुमध्ये लिखेत्कूर्चं त्रिकोणं च ततोपरि।
[3]वृत्तषट्कोणवृत्ताष्टदलं वृत्तं च भूपुरम् ॥ ४७ ॥
चतुर्द्वारोपशोभाढ्यं यंत्रं नीलामनोः शुभम्।
बटुकाद्याश्चतुर्द्वारि परितो द्वारदेवताः ॥ ४८ ॥
तदस्त्राणि च तद्बाह्ये दलेष्टौ भैरवाः प्रिये।
केसरे मातृकाष्टौ च वृत्तेऽष्टसिद्धयः क्रमात् ॥ ४९ ॥
षट्कोणे तु षडंगानि त्रिकोणे दैवतत्रयम्।
कालरात्रि–महारात्रि–मोहरात्रि-क्रमात् त्रिके ॥ ५० ॥
मध्ये नीलां समाराध्य[4] ततो नैवेद्यमर्पयेत्।
नीराजनं त[5]तः कृत्वा स्तुत्वा नत्वा विसृज्य च ॥ ५१ ॥
नीला संसाध्य यत्नेन षट्त्रिंशद्यक्षिणीगणम्।
कालीकूर्चवधूमाया अमुकी[6]यक्षिणीति च[7] ॥ ५२ ॥
अन्ते पीमानि[8] बीजानि हूं फट् स्वाहान्विता गणाः[9] *।
षट्त्रिंशच्चैव यक्षिण्यः क्रमेण चाद्भुताः प्रिये ॥ ५३ ॥
तथैव बलिनो यक्षाः हूं क्रीं हूं प्रीं[10] पुटेन च[11]।
सर्वे यक्षा हुं फडंता चतुरशीति कीर्तिताः ॥ ५४ ॥
यक्षिणीसिद्धिमासाद्य साधकः सुखमाप्नुयात्।
राजा भवति लोकेऽस्मिन्विना राज्येन पार्वति ॥ ५५ ॥
[12]अल्पज्ञमपि विद्वांसं मूढं च पण्डितं तथा।
यः करोत्येवमादीनि[13] राज्यरत्नधनान्यपि[14] ॥ ५६ ॥
यो वै[15] ददाति साध्यायः स यक्षो[16] नात्र संशयः।
देवयोनिर्मानवी च द्विधा योनिः प्रकीर्तिता ॥ ५७ ॥

1. B °क्तिर्वा। 2. CD साध°। 3. C omits this line. 4. C °हृत्य। 5. B °म°। 6. B °कं; N °क्। 7. B °णिमध्यतः। 8 CN °पि मणि°। 9. D मनुः। 10. B स्फैं ह्रीं हूं प्रीं; CN स्फं क्रीं हू क्रीं। 11. B वा। 12 C omits two lines. 13. B °दीनां। 14. B राजानं राजवानपि। 15. D घोरे। 16. C यक्षिणी। * The Mantra is restored in D as क्रीं हूं ख्रीं ह्रीं अमुकी यक्षिणी क्रीं हूं ख्रीं हूं फट् स्वाहा।

तत्तद्रूपं समासाद्य तत्सिद्धि[1]मधिगच्छति ।

**श्रीदेव्युवाच ।**

फलं तु यक्षिणीसिद्धेर्यक्षसिद्धेश्च किं फलम् ॥ ५८ ॥

तन्मे वद दयापार परात्पर नमोऽस्तु ते ।

**श्रीशिव उवाच ।**

[2]दीनारं गुटिका खड्गं वेतालपादुकाञ्जनाः ॥ ५९ ॥

रसं रसायनं[3] गुप्तिस्तिलकोऽदृश्यता तथा ।
कपालं च पटः शंखस्त्रिशूलं[4] डमरुं तथा ॥ ६० ॥

आकर्षणं वश्यता च मोहनोच्चाटनं तथा ।
महेन्द्रजालमिद्रादिजालानां रचना तथा ॥ ६१ ॥

उर्ध्वोत्क्रमणकर्मादि खेचर्याद्या[5] हि[6] सिद्धयः ।
गोपनीयं गोपनीयं किमन्यच्छ्रोतुमिच्छसि ॥ ६२ ॥

प्रोक्ता नीलाभिधा नित्या श्रीविद्यादौ पताकिका ।
यंत्रमंत्रादिप्र[7]स्तारसंकेतभ्रंशनं[8] तथा ॥ ६३ ॥

लोपामुद्राविधौ[9] कादौ य[10]दुक्तं तद्विधौ चरेत् ।
लोपामुद्रा कादिहादि कामराजे[11]ऽपि तद्[12]द्वयम् ॥ ६४ ॥

तत्काल्यां कादिकाली च हादिकल्प[13]द्रुमो य[14]था ।
कादौ निगदितं देवि[15] यक्षिणीयक्षमण्डलम् ।
इति संक्षेपतः प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ॥ ६५ ॥

इति श्रीशक्तिसङ्गममहातन्त्रराजे उत्तरभागे तृतीयखण्डे श्रीमदक्षोभ्यमहोग्रतारासंवादे दीक्षा[16]नित्याविधिर्नाम षोडशः[17] पटलः ।

---

1. C °साध्य° । 2. N reads this verse differently as खड्गवेतालपादुका दीनारगुटीकाञ्जने । 3. B °ने । 4. B °शङ्ख° । 5. B °दि° । 6. B सु° । 7. D °वि° । 8. D भ्रमणं । 9. B °भिधे । 10. D त° । 11. B °जो° । 12. D च । 13. B °ल्प° । 14. C त° । 15. C पूर्वं । 16. CDN नीला° । 17. B पंचदशः ।

## सप्तदशः पटलः।

**श्रीदेव्युवाच।**

देवेश श्रोतुमिच्छामि घनानित्याक्रमार्चनम्।
उद्यद्[1]घना घनाकारा घनानित्या घनोदया॥ १॥
घनालया घोष[2]वती घटिकोदयरूपिणी।
तस्या मंत्रार्चनं नित्यं वद त्वं करुणानिधे॥ २॥

**श्रीशिव उवाच।**

प्रणवं पूर्वमुद्धृत्य कालिकात्र्य[3]क्षरं तथा।
घनालये घनाघने[4] ह्रीं हूं फट् च मनुर्मतः* ॥ ३॥[5]
भुवनाक्षरो घनायाश्च[6] मंत्रोऽयं सुरपादपः।
अघोरभैरवऋषिर्विराट् छंदः प्रकीर्तितम्॥ ४॥
काली बीजं तथा माया शक्तिः[7] हुं फट् च कीलकम्।
कालिकाप्रीतये देवि विनियोगः प्रकीर्तितः॥ ५॥
षड्दीर्घभाजा बीजेन कर्पूरेण षडंगकम्।
घनानित्यां महाविद्या नीलजीमूतसन्निभाम्॥ ६॥
मत्तकोकिलनेत्राभां पक्वजम्बूफलप्रभाम्।
सु[8]दीर्घप्र[9]पदालंबि-मुक्तालंबि-[10]कचोच्चयाम्॥ ७॥
चतुर्भुजां त्रिनयना दिगम्बरविनोदि[11]नीम्।
करालास्यां घोरदंष्ट्रां पीनोन्नतपयोधराम्॥ ८॥
ओष्ठप्रांत[12]गलद्रक्त[13]धाराविस्फुरिताननाम्।
वीराणां करकांच्या तु भूषितां भीमविग्रहाम्॥ ९॥
खड्गखेटकपट्टीशमुद्गरान् बिभ्रती क्रमात्।
ध्यातव्यां सततं वीरै[14]र्महावीरघनालया॥ १०॥
लक्षमात्रं जपेन्मंत्रं घृताक्तैः कमलैर्हुनेत्।
तद्दशांशं तर्पणं तु गंधदुग्धादिभिः प्रिये॥ ११॥
तद्दशांशं मार्जनं तु शीतलेन जलेन च।
तद्दशांशं ब्राह्मणाना भोजनं समुपाचरेत्॥ १२॥
एवं क्रियासमायुक्तो मंत्रसिद्धिं स विन्दति।
घनायंत्रं प्रवक्ष्यामि पूजनं यादृशं भवेत्॥ १३॥
षट्कोणवृत्ताष्टदलं भूपुरेणोपशोभितम्।
षट्कोणे तु षडंगानि षड्धा तु देवता अ[15]पि॥ १४॥

---

1. B पक°। 2. B प्रोष्ठ°। 3. B °व्य°। 4. B °ले। 5. C omits this line. 6. CN °स्तु°। 7. C शंख°। 8. C सं°। 9. C °दृ°। 10. CN °ब°। 11. C °मोद्दि°। 12. C अष्टोत्तर°। 13. C °द्रव°। 14. °सनबीजं च। 15. B °न्य°। * The Mantra is restored is D as ओं क्रीं ओं घनालये घनाघने ह्रीं हूं फट्।

दलाष्टके मातृकाष्टौ ततो भैरवपूजनम् ।
लोकपालान्भूपुरेषु तदस्त्राणि च तद्बहिः ॥ १५ ॥

यथाशक्ति जपित्वा तु ततो नीराजयेद्विभुम् ।
नीराजनान्ते[1] देवेशि स्तुत्वा नत्वा विसृज्य[2] च ॥ १६ ॥

इति संक्षेपतः प्रोक्ता घनानित्या घनालया[3] ।
सिद्ध्य[4]ष्टकसमाक्रांता किं पुनः श्रो[5]तुमिच्छसि ॥ १७ ॥

**श्रीशिव उवाच ।**

[6]देवेशि शृणु वक्ष्यामि बलाकापूजनक्रमम् ।
बलाका द्वादशी नित्या सर्वनित्यावशङ्करी ॥ १८ ॥

यज्ज्ञानात्सकला विद्याः स्वस्वस्थानपदंगताः ।
तस्या मंत्रो महेशानि कथ्यते शृणु साम्प्रतम् ॥ १९ ॥

प्रणवं कालिकाबीजं कूर्चमाये[7] समुद्धरे[8]त् ।
बलाका[9] कालिशब्दान्ते अत्यद्भुतपराक्रमे ॥ २० ॥

अभीष्टसिद्धिं मे देहि[10] हुं फट् स्वाहा मनुर्मतः * ।
कालि[11]काऽस्या भवेद्बीजं कूर्चं शक्तिः प्रकीर्तिता ॥ २१ ॥

माया कीलकमुद्दिष्टं कीलकेन षडंगकम् ।
षडंगन्यासमासाद्य[12]-ध्यानं कुर्यान्महेश्वरि ॥ २२ ॥

अञ्जनानन्त[13]सदृशीं कोटिकालानलप्रभाम् ।
चतुर्भुजां त्रिनयनां मुण्ड[14]दुर्गनिवासिनीम् ॥ २३ ॥

दिगम्बरां करालास्यां पीनोन्नतपयोधराम् ।
शवानां करसंहत्या[15] कृतकाञ्चीं शवासनाम् ॥ २४ ॥

मुक्तकेशीं मदाघूर्णां प्रसन्नमुखपङ्कजाम् ।
सूर्यकोटिसमाभासां मुण्डमालाविभूषिताम् ॥ २५ ॥

[16]खड्गमुण्डधरां वामे सव्ये खर्परतर्जनीम् ।
संबिभ्रती महाकाली बलाकारूपधारिणीम् ॥ २६ ॥

श्मशाननिलयां देवीं भूतप्रेतसमन्विताम् ।
शिवाभिर्घोररूपाभिर्वेष्टितां घोरनादिनीम् ॥ २७ ॥

---

1. C °न्तं, D °नं तु । 2. C °सर्ज । 3. D महोदया । 4. D °द्धा° । 5. B किमन्यच्छ्रो° । 6. Instead of this line C has नीराजनान्तं श्रोतुमिच्छामि साम्प्रते । 7. B °या । 8. B °द्भवे° । 9. B °के । 10. D ह्रये देवि । 11. B कील° । 12. D °माचर्य । 13. D नानां तु । 14. C मृड°, D मूढ° । 15. C °हृत्य । 16. D omits three lines.
* The Mantra is restored in D as ओं क्रीं हूं ह्रीं बलाकाकालि अत्यद्भुतपराक्रमे अभीष्टसिद्धिं मे देहि हूं फट् स्वाहा ।

मा भै वीरवरं ब्रूहि ह्यद्यतं ते करोम्यहम् ।
एवं ध्यात्वा जपेल्लक्षं मंत्रः[1] सिद्धो भवेद्ध्रुवम् ॥ २८ ॥

दशांशं बिल्वपत्रैश्च घृताक्तैर्जुहुयात्सुधीः ।
तर्पणं तद्दशांशेन तद्दशांशेन मार्ज[2]येत् ॥ २९ ॥

[3]तद्दशांशं ब्राह्मणानां भोजनं परिकीर्तितम् ।
विप्राराधनमात्रेण सर्वांगपूर्णतामियात् ॥ ३० ॥

यद्यदङ्गं विहीनं च तत्साङ्गं[4] द्विज[5]भोजनम् ।
अन्यत्सर्वं महेशानि कालिकावत्समाचरेत् ॥ ३१ ॥

इति संक्षेपतः प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ।

**श्रीदेव्युवाच ।**

[6]देवेश श्रोतुमिच्छामि रहस्यातिरहस्यकम् ॥ ३२ ॥

मात्रानित्याविधानं तु कथयस्व ममाधुना ।

**श्रीशिव उवाच ।**

मात्रानित्या तु या प्रोक्ता सर्वनित्योत्तमोत्तमा ॥ ३३ ॥

तस्या मंत्रं महेशानि यथावदवधारय ।
प्रणवं कालिकाबीजं मायाकूर्चं च मातृकाम् ॥ ३४ ॥

सबिंदुमातृकावर्णं चतुर्बीजानि वै पुनः ।
पुनश्च मातृकावर्णं चतुर्बीजं पुनश्च तत्[7] ॥ ३५ ॥

एवं क्षांता[8] महेशानि महामात्रा[9] प्रकीर्तिता ।
चतुर्बीजं महा[10]मात्रे सिद्धिं मे देहि सत्वरम् ॥ ३६ ॥

हूँ फट् स्वाहेति देवेशि मात्रामंत्रः परो मतः* ।
प्रणवं कालिकाबीजं कूर्चमाये[11] ततः शिवे ॥ ३७ ॥

मध्ये नित्या नाम दद्यात् संबुध्यन्तं[12] च केवलम्[13] ।
नित्यामंत्राश्च जायंते भिन्न[14]रूपाश्च पार्वति ॥ ३८ ॥

पुनर्बीजानि हूं फट् च स्वाहांताः परिकीर्तिताः† ।
[15]आद्ययोगात्संपुटाद्वा हुं फडंतप्रयोगतः ॥ ३९ ॥

---

1. CN °न्त्र° । 2. C होम° । 3. D omits two lines. 4. B °गे । 5. B विप्र° । 6. C omits two lines. 7. D °श्चरेत् । 8. D °न्तं । 9. D मन्त्राः । 10. B तथा । 11. D °या । 12. CN °ध्यन्ता । 13. CN °ला । 14. D भीम° । 15. CD omit four lines. । * D restores the Mantra as ओं क्री ह्री हूं ऐं ऐं ऐं ऐं ऐं ऐ ऐं ऐं ऐ ऐ महामात्रे सिद्धिं मे देहि सत्वरं हूं फट् स्वाहा । † D restores the Mantra as ओं क्रीं हूं ह्रीं नित्येव निन्या ओं क्रीं हूं ह्रीं हूं फट् ।

एवं नवति नित्यानां मंत्रभेदा भवन्ति च ।
भैरवोऽस्य ऋषिः प्रोक्तो उष्णिक् छंदः प्रकीर्तितम् ॥ ४० ॥

मात्रादेवीति विख्याता देवता परिकीर्तिता ।
[1]क्रीं बीजं हूं[2] तथा शक्तिः ह्रीं कीलकमुदाहृतम् ॥ ४१ ॥

विनियोगो महेष्टार्थे कालिकार्थे प्रकीर्तितः ।
मायाषड्दीर्घयुक्तेन षडङ्गन्यासमाचरेत् ॥ ४२ ॥

तथा ध्यायेन्महाविद्या नीलाञ्जनगिरिप्रभाम् ।
चतुर्भुजां त्रिनयनां मुण्डपद्मोपरिस्थिताम् ॥ ४३ ॥

कपालकर्तृकाहस्तां खड्गमुण्डधरां पराम् ।
सुदन्तुरां[3] महारौद्रीं चण्डनादातिभीषणाम् ॥ ४४ ॥

शववक्षःसमारूढां लेलिहाना शवं शिवाम् ।
एवंविधां तां मात्राम्बां[4] महाघोरनिनादिनीम् ॥ ४५ ॥

इति संचिन्त्य देवेशि लक्षमात्रं जपं चरेत् ।
दशांशं जुहुयाद्बिल्वैरथवा कदलीफलैः ॥ ४६ ॥

द्राक्षाभिः पायसैर्वापि दशांशं हवनं चरेत् ।
तर्पणं मार्जनं विप्रभोज्यं यत्नेन कारयेत् ॥ ४७ ॥

यद्यदङ्गं विहीयेत[5] तत्संख्याद्विगुणो जपः ।
जपपूजाप्रयोगादि कालीवल्लिपिमातृवत् ॥ ४८ ॥

इति संक्षेपतः प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ।

**श्रीदेव्युवाच ।**

देवेश श्रोतुमिच्छामि रहस्यातिरहस्यकम् ॥ ४९ ॥

**श्रीशिव उवाच ।**

रहस्यमपि ते देवि कथ्यते श्रृणु सांप्रतम् ।
मुद्रानित्याविधानं च[6] सर्वसारोत्तमोत्तमम् ॥ ५० ॥

मुद्र[7]णी नाम[8]का नित्या श्रीविद्यायां तु मुद्रिणी ।
मुद्रिणी दण्डिनी नाम्नी देवी सौदर्यविग्रहा ॥ ५१ ॥

महाविद्यादिकादीनां मनोमुद्रणकारिणी ।
तेनेयं मुद्रानित्याख्या सर्वसिद्धिपराम्बिका ॥ ५२ ॥

प्रणवं कालिकाबीजं माया कूर्चं क्रमेण[9] च ।
प्रीँ फ्रेँ[10]बीजयुगं प्रोच्य मुद्राम्बापदमुद्धरेत् ॥ ५३ ॥

1. D omits two lines. 2. C हिं । 3. CDN दंतुरा च । 4. CN श्रीमात्रां । 5. C °नेतु । 6. B हि । 7. B °द्रि° । 8. B नामि, D मालि° । 9. C °चेक्तिमेव । 10. B प्रों ।

मुद्रासिद्धिं मे[1] देहि भोजगन्मु[2]द्रास्वरूपिणी ।
हूं फट् स्वाहासमायुक्तो वीतिवर्णो[3] मनुः शुभः* ॥ ९४ ॥

महादेवो ऋषिश्चास्य गायत्री छंद ईरितम् ।
मुद्रानित्या महादेवी देवता परिकीर्तिता ॥ ९५ ॥

[4]कालीबीजं बीजमस्या माया शक्तिः प्रकीर्तिता ।
कूर्चं कीलकमित्युक्त काल्या षड्दीर्घयुक्तया ॥ ९६ ॥

षडङ्गन्यासमाचर्य मुद्रा ध्यायेन्महेश्वरि ।
अञ्जनाद्रिनिभां मुद्रां मुण्डमालाविभूषिताम् ॥ ९७ ॥

दिगम्बरां घोरदंष्ट्रां चंडनादाति[5]भीषणाम् ।
दक्षिणा मुक्तकेशाली दिगम्बरविनोदिनीम् ॥ ९८ ॥

पिङ्गाक्षी प्रज्वलज्जिव्हां घोरचेष्टाभयानकाम् ।
शवानां करसंघातैः कृतकांची हसन्मुखीम् ॥ ९९ ॥

सृक्कद्वयगलद्रक्तधाराविस्फुरिताननाम् ।
कपाल[6]कर्तृका[7]हस्तां[8] खड्गखेटकधारिणीम् ॥ ६० ॥

महाकालेन च समं रतासक्तां क्षुधातुराम् ।
वरं ब्रूहि वरं ब्रूहि वरं ब्रूहीति वादिनीम्[9] ॥ ६१ ॥

एवं संचिन्त्य देवेशि पूजयेद्यंत्रमादरात् ।
त्रिकोणं वृत्तषट्कोणं वृत्ताष्टदलभूपुरम्[10] ॥ ६२ ॥

चतुर्द्वारोपशोभाढ्यं तद्द्वारि गणपस्तथा ।
योगिनीक्षेत्रपाला[11]श्च बटुको हि चतुर्थकः ॥ ६३ ॥

लोकपालाश्चलोकेशा[12] भूपुरे क्रमशो यजेत् ।
दले[13]ष्टमातृकां पूज्य केसरे भैरवाष्टकम् ॥ ६४ ॥

दलाष्टाग्रे त्वष्टसिद्धिः षट्कोणेषु षडङ्गकम्[14] ।
[15]राज्यदा भोग[16]दा मोक्षजयदाऽभयदा तथा ॥ ६५ ॥

षष्ठी तु सिद्धिदा प्रोक्ता षट्कोणेषु क्रमाद्यजेत् ।
इच्छां ज्ञानं क्रियां चैव त्रिकोणे परिपूजयेत् ॥ ६६ ॥

मध्ये मुद्रा च संपूज्य सर्वपञ्चोपचा[17]रकैः ।
इति पूजां समासाद्य ततो नीराजनं चरेत् । ६७ ॥

---

1. C च मे । 2. D देहि मे भोज्यान्मु° । 3. CN °र्ण्यो; D °वन्यो । 4. D omits this line. 5. C उग्रचण्डाति° । 6. B °लं । 7. B °कां । 8. B °स्ते । 9. CN वाऽवदत्; D इवावदत् । 10. C °रा । 11. B क्षेत्रपश्च, D क्षेत्रपश्चैव । 12. N °शौ । 13. D अष्टे° । 14. D परिपूजयेत् । 15. D omits three lines. 16. B °ज्य° । 17. CN °हा° । * Following D mainly, the Mantra may be restored as ओं क्रीं ह्रीं हूं प्रीं फ्रें मुद्राम्बा मुद्रासिद्धिं मे देहि भो जगन्मुद्रास्वरूपिणी हूं फट् स्वाहा ।

नीराजनान्ते देवेशि प्राणायामपुरःसरम्।
लक्षद्वयं जपेन्मंत्र सुश्वेतैः करवीरजैः ॥ ६८ ॥

दशांशं हवनं कृत्वा तद्दशांशेन तर्पणम्।
मार्जनं ब्राह्मणानां च भोजनं समुपाचरेत् ॥ ६९ ॥

एवं सिद्धमनुर्मन्त्री प्रयोगार्हो न चान्यथा।
यद्यद्धृदि समाधत्ते तत्तत्कृत्यं करोति हि ॥ ७० ॥

सर्वं तु कालिवत्प्रो[1]क्त विशेषः कथितो[2] मया।
इति संक्षेपतः प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ॥ ७१ ॥

इति श्रीशक्तिसङ्गममहातन्त्रराजे उत्तरभागे तृतीयखण्डे श्रीमदक्षोभ्यमहोग्रतारासंवादे मुद्रा[3]नित्याविधिर्नाम सप्तदशः[4] पटलः।

---

1. B कालिको॰। 2. D कथ्यते। 3. B घना॰। 4. BN षोडशः।

## अष्टादशः पटलः।

**श्रीदेव्युवाच।**

देवेश श्रोतुमिच्छामि मितानित्याविधिक्रमम्।
सर्वविद्यावरारोहां मितां मे ब्रूहि सादरम्[1] ॥ १ ॥

**श्रीशिव उवाच।**

शृणु वक्ष्यामि देवेशि रहस्यातिरहस्यकम्।
सर्वविद्यामहाराज्ञी मितानाम्नी महोदया ॥ २ ॥
तस्या मंत्रं प्रवक्ष्यामि कालीसर्वाङ्ग[2]मङ्गु[3]तम्।
प्रणवं पूर्वमुद्धृत्य कालिकाबीजमुद्धरेत् ॥ ३ ॥
कूर्चबीजं तथा मायां वाग्भवं बीजमुद्धरेत्।
मितेपदं समुच्चार्य तथा परिमिते पदम् ॥ ४ ॥
पराक्रमाय च पदं पुनर्बीजानि चोद्धरेत्।
सो[4]हं हूं फट् ततः स्वाहा सप्तविंशतिवर्णवा[5]न्* ॥ ५ ॥
मंत्रोऽयं कथितो देवि ऋषिछंदादिकं शृणु।
महाकाल[6]ऋषिश्चास्य त्रिष्टुप् छंदः प्रकीर्तितम् ॥ ६ ॥
मितानित्या देवता च कालिका बीजमीरितम्।
कूर्चं शक्तिर्महेशानि माया कीलकमीरितम् ॥ ७ ॥
कीलकेन षडङ्गानि षड्दीर्घाढ्येन कारयेत्।
ध्यायेन्नी[7]लाद्रिसङ्काशां नीलजीमूतसन्निभाम् ॥ ८ ॥
रक्तवस्त्रां शवासीनां[8] मुण्डमालाविभूषिताम्।
पीनोन्नतकुचद्वंद्वा पीन[9]वक्षो नितम्बिनीम् ॥ ९ ॥
[10]दक्षिणां मुक्तकेशालीं दिगम्बरविनो[11]दिनीम्।
महादेवहृदम्भोजमध्यस्थां शंखकङ्कणाम् ॥ १० ॥
कोटिकालानलप्रख्यां श्मशानालयवासिनीम्।
खड्गमुण्डधरां वामे सव्येऽभयवरप्रदाम् ॥ ११ ॥
साधकाकांक्षहृदयां साधकस्य वरप्रदाम्।
मुखसान्द्र[12]स्थितामोदमोदिनीं मदविह्वलाम् ॥ १२ ॥
आरक्तमुखसान्द्राभिर्नेत्रादिभिर्विराजिताम्।
दक्षिणां सस्मिता[13] दि[14]व्यां दीननाथां विभावयेत् ॥ १३ ॥

---

1. D शङ्कर। 2. B °र्वस्त्र°। 3. C °मुद्धृ°। 4. B स्वो°। 5. D °का°। 6. CN °ञ्जो। 7. D °त्ति°। 8. D °रूढां। 9. B °त°। 10. D omits this line. 11. B °ना°। 12. D °सार्द्रा°। 13. B संमिता। 14. C दे°। * The Mantra may be restored on the lines of D as ओ क्रीं हूं ह्रीं ऐ मिते पारमिते पराक्रमाय ओं क्रीं हूं ह्री ऐं सोऽहं हूं फट स्वाहा।

एवं ध्यात्वा मितां देवीं लक्षत्रयं जपं चरेत् ।
किंशुकैर्हवनं कार्यं ज्योतिष्मत्याथवा प्रिये ॥ १४ ॥

ज्योतिष्मतीप्रसूनेन फलं किंशुकवन्मतम् ।
आरक्तकरवीरेण जुहुयान्मंत्रसिद्धये ॥ १५ ॥

त्रिकोणकुण्डे जुहूया[1]त्संस्कृते खादिरानले ।
ताम्बूलपत्रहोमेन कालिका वशमानयेत् ॥ १६ ॥

पुष्पाक्त[2]नागवल्या च नागिनीसिद्धिमाप्नुयात् ।
वज्रपुष्पेण जुहुयात् डाकिन्या वा महेश्वरि ॥ १७ ॥

धत्तू[3]रेणारि[4]निधनं कुन्दैश्च कविता लभेत् ।
जातीपुष्पैर्जयावाप्तिस्तिलपुष्पैर्बलोन्नतिः ॥ १८ ॥

पुन्नागैः पुरुषार्थाय केतक्या कामिनी लभेत् ।
आसुर्या रिपुनाशश्च चन्दनेन जयी सदा ॥ १९ ॥

तथैवाऽगुरुणा देवि राजराजपदं लभेत् ।
रक्तचन्दनहोमेन सर्वमोहनमाचरेत् ॥ २० ॥

गिरिकर्ण्या कन्यकाप्तिः से[5]वंत्या शिवरूपता ।
गुडूच्या रिपुनाशश्च मरीचेना[6]कृष्टिरुत्तमा ॥ २१ ॥

पूगीफलैर्महाभाग्यं तथा जातिफलैर्धनम् ।
स्तंभनं चम्पकेनैव जंब्वा[7] जन्मार्तिनाशनम् ॥ २२ ॥

एवं नाना विधानेन काममुद्दिश्य साधयेत्[8] ।
ततो होमदशांशेन तर्पणं पीठनीरतः[9] ॥ २३ ॥

अष्टगन्धोदकेनापि तथा केसरनीरतः ।
तर्पणस्य दशांशेन मार्जनं समुपाचरेत् ॥ २४ ॥

तद्दशांशं विप्रभोज्यं शक्तयश्च कुमारिकाः ।
पूजयेद्भोजयेद्देवि सर्वसिद्धिं स विंदति ॥ २५ ॥

अथ पूजाविधानस्य यंत्रं संकथ्यते शृणु ।
त्रिकोणत्रितयं लि[10]ख्य वृत्तं[11] षट्कोणसंयुतम् ॥ २६ ॥

वृत्ताष्टदलशोभा[12]ढ्यं भूपुरेण समन्वितम् ।
चतुर्द्वारोपशोभाढ्यं मध्ये बिन्दु[13]विभूषितम् ॥ २७ ॥

---

1. D omits from here to जुहुयात् in the fourth line. 2. B °क्षक° । 3. CD धुस्तू° । 4. D °पि° । 5. B स्त्र° । 6. C °च्या । 7. CD °धा° । 8. CN °कः । 9. D °मीरितं । 10. D ले° । 11. CN °त्त° । 12. D °भूषा° । 13. C बिन्दुमध्ये ।

कालीं करालिनी[1] घोरां[2] प्रथमे तु त्रिकोणके।
द्वितीये तु त्रिकोणे च वामां[3] ज्येष्ठां च रौद्रिकाम् ॥ २८ ॥

तृतीये तु त्रिकोणे तु इच्छां ज्ञानं क्रियां तथा।
अथ[4] वृत्ते यजेद्देवि वार्ताळी प्रथमं यजेत् ॥ २९ ॥

द्वितीयभागे देवेशि लघुवाराहिका यजेत्।
तृतीयभागे देवेशि स्वप्नवाराहिका यजेत् ॥ ३० ॥

तिरस्करणिकां पूज्य चतुर्थभागके शिवे।
षट्कोणवामे[5] देवेशि चतुर्द्वारं[6] प्रपूजयेत् ॥ ३१ ॥

षट्कोणे तु षडंगानि वृत्ते सिद्ध्यष्टकं[7] तथा।
दलेऽष्टौ मातृकाः पूज्यास्तदन्तेऽष्टौ च भैरवाः ॥ ३२ ॥

भूपुरे लोकपालाश्च तदस्त्राणि च तद्बहिः।
एवमिष्ट्वा मितां नित्या विद्यामित्रां नि[8]रञ्जनीम् ॥ ३३ ॥

एवमाराधनायुक्तो मंत्रसिद्धिं लभेन्नरः।
अथवाऽन्यप्रकारेण ध्यानं नित्याक्रमे शृणु ॥ ३४ ॥

अञ्जनाद्रिनि[9]भाः सर्वा मुण्डमालाविभूषणाः।
दक्षहस्ते देवी[10]खड्गं वामहस्ते च तर्जनीम् ॥ ३५ ॥

धारयन्त्यः शुभाः काल्या[11] वरदाभयतत्कराः।
एतत्सामान्यतो ध्यानं नाममंत्रविधौ स्मृतम् ॥ ३६ ॥

रहस्यमत्र[12] कथितं सिद्धयोऽष्ट[13]विधाः करे।
अञ्जनं गुटिका खड्गं वेतालं यक्षिणीगणम् ॥ ३७ ॥

चरुकं[14] तिलकं वासः कपालं पादुका तथा।
लगुडः किन्नरीसिद्धिर्डामर्यादि महाकला ॥ ३८ ॥

चराचरगतिश्चैव त्वणुत्व[15] लघिमादिकम्।
[16]परकायप्रवेशश्च ततश्चैव[17] रसायनम् ॥ ३९ ॥

स्पर्शश्चिन्तापहारश्च भूतसञ्चरणं तथा।
मृतकोत्थापनं दिव्याः सिद्धयस्तत्करे स्थिताः ॥ ४० ॥

महापीठं समुद्धृत्य नित्या स्थाप्या यथ क्रमम्।
अथवा मूलमंत्रेण यजेन्मध्ये स्वदेवताम् ॥ ४१ ॥

---

1. N °ला; C °ळीं। 2. C श्रीशेण, N र्श घोरां। 3. B °क्यं। 4. C °ष्ट°। 5. D °गके तु; CN °वृत्ते। 6. CN °री; D °रि। 7. D °क। 8. N °त्राति°। 9. D °प्र°। 10. CN °व; D वेद°। 11. D शुभारण्ये। 12. D °मन्त्रं। 13. CN वि°। 14. D रक्तकं। 15. D त्वणिमा। 16. C omits this line. 17. B तथैव।

यथोक्तमंत्रसिध्यर्थं ध्यायेच्च कुलवस्तुभिः ।
यजेत्संतर्पयेच्छक्तिं[1] भोजनाच्छादनादिभिः ॥ ४२ ॥

धूपयेद्दशगंधेन देवताऽवतरेत्तदा ।
रक्ताक्षी स्तब्धनेत्राङ्गी प्रसन्नमुखपंकजा ॥ ४३ ॥

काचिदेका भवेच्छक्तिरितरास्तन्मुखस्थिताः[2] ।
तस्मिन्क्षणे त[3]त्प्रकृतिं कृत्वा माषमयीं शुभाम् ॥ ४४

घृतपक्वा[4] मांसमया उपभोगाः प्रकल्पयेत् ।
ग्रसे ग्रासे सुरां[5] दद्यान्मत्स्यशाकल[6]कानि च ॥ ४५ ॥

आद्यं बीजं समुच्चार्य नित्ये[7] क्रूरमुखे तथा ।
क्रूरदं[8]ष्ट्रे ललज्जिह्वेऽमुकस्तेऽयं प्रकल्पितः ॥ ४६ ॥

आहारो भक्षययुगं[9] स्वाहान्तं ठ[10]द्वयं पुनः ।
आद्यबीजं समुच्चार्य मृतं ध्यायेद्रिपुं तदा ॥ ४७ ॥

तत्कालमेव हरते मिता[11] प्राणान्सुरेश्वरि ।
श्रूयतेऽसौ मृत इति तावत्सम्भोजयेन्मिताम् ॥ ४८ ॥

पश्चात्पञ्चाङ्गधूपेन धूपयेत्तां वरप्रदाम् ।
हासं कृत्वा वरं दत्वा व्रजेत्सा शक्तिदेहतः[12] ॥ ४९ ॥

श्मशाने वाऽथ सम्पूज्या वडवाग्निसमप्रभा ।
ससैन्यराज्ञो नाशाय नृमासैः[13] कुलवस्तुभिः ॥ ५० ॥

उद्यानेषु वशीकर्तुं उच्चाटे तु[14] नदीतटे ।
नातः परतरा विद्या सद्यः प्रत्ययकारिणी ॥ ५१ ॥

विख्याता उत्तरा[15]म्नाये शतधा पूजिता मया ।
गोप्याद्गोप्यतराप्येषा मया तुभ्यं प्रकाशिता ॥ ५२ ॥

अतः परं महादेवि किमन्यच्छ्रोतुमिच्छसि ।

**श्रीदेव्युवाच ।**

देवेश श्रोतुमिच्छामि यश्च धूपस्त्वयोदितः ॥ ५३ ॥

दशगन्धप्रियस्तस्याः कानि द्रव्याणि तत्र तु ।

**श्रीशिव उवाच ।**

काश्मीरस्य त्रयो भागास्त्रयो दद्यात्तथाऽगुरोः[16] ॥ ५४ ॥

---

1. C °त्तया । 2. D न्मुखरास्थिता । 3. CN तु । 4. CN °क्वां । 5. D रसं । 6. B क्षधा कन°; C सक्षधा । 7. D °त्यं । 8. D स्फुरद्दंष्ट्रे । 9. C °येत युग्मं । 10. D च । 11. C °त° । 12. DN °ता । 13. N तरसैः; D त्रिमासैः । 14. D °षु । 15. D दक्षिणा° । 16. CN °गुरुः; D °गुरुं ।

भागाः पंचैव चन्द्रस्य मृगनाभेर्द्वयं तथा ।
कृष्णचन्दनकाद्यष्टौ श्वेतचन्दनकाश्च षट् ॥ ९९ ॥

महिषाक्षस्य सप्तैव[1] सर्जका[2] द्वादशैव हि[3] ।
मांस्या[4] भागाष्टकं कृत्वा[5]ऽज्याद्भागैकं[6] समाहरेत् ॥ ९६ ॥

दशगन्धस्तु धूपोऽयं पञ्चाङ्गं शृणवथ[7] प्रिये ।
मूलं कृष्णागुरोर्भागं[8] पत्रकं च त्वचस्त[9]था ।
स्वर्णपुष्पं जातिपत्री समभागेन धूपयेत् ॥ ९७ ॥

इति श्रीशक्तिसङ्गमहातन्त्रराजे उत्तरभागे तृतीयखण्डे श्रीमदक्षोभ्यमहोग्रतारासंवादे
मितानित्याविधिर्नामाष्टादशः पटलः ।

---

1. C रयत्येव, D मत्यैव । 2. C वर्जयाद्° । 3. C तु । 4. CN °स° ।
5. D दत्त्वा । 6. CN भागमेकं । 7. D °णु तत् । 8. CN °रक्तं । 9 N °चं त°;
C तत्रजं

## एकोनविंशतितमः पटलः ।

### श्रीदेव्युवाच ।

देवेश त्वत्प्रसादेन मितायाः संश्रुतो विधिः ।
तिरस्कर[1]णिकां ब्रूहि महामोहनकारिणीम् ॥ १ ॥

### श्रीशिव उवाच ।

शृणु देवि प्रवक्ष्यामि महामोहनकारिणीम् ।
श्रीविद्यायाश्च बाला[2]या अङ्गभूतां सुगोपिताम् ॥ २
वाग्भवं कालिकाबीजं भुवनेशी हरिप्रियाम् ।
तिरस्करणिशब्दान्ते ततः सकलजनं वदेत् ॥ ३ ॥
वाग्वादिनि सकलपदं पशुजनमनो[3] वदेत् ।
चक्षुः श्रोत्रं तथा जिव्हां घ्राणं[4] तिरस्करणं[5] वदेत् ॥ ४ ॥
[6]कुरुद्वयं ठद्वयं च[7] स्वाहान्तोऽयं मनुः स्मृतः ।
वाग्भवं भुवनां लक्ष्मी क्लीं[8] भगवतीं वदेत् ॥ ५ ॥
स्वाहया तु संयुक्तो द्वितीयोऽयं परो मनुः ।
[9]माहेश्वरी सर्वपशुजनचक्षुस्तिरस्कर ॥ ६ ॥
णं कुरुयुक् स्वाहया तु संयुक्तोऽयं परो मनुः ।
त्रैलोक्यमोहिनिपदं महामायेपदं ततः ॥ ७ ॥
सर्वजनमनश्चक्षुस्ततस्तिरस्कृतिं वदेत् ।
कुरुयुक् स्वाहया युक्तश्चतुर्थोऽयं क्रमान्मनु ॥ ८ ॥
वाङ्माया कमलाबीजं ह्सौ[10]युगक्षरमुद्धरेत् ।
ॐ नमो भगवतिपदं श्रीमहेश्वरि चोद्धरेत् ॥ ९ ॥
ततः सर्वजनमनश्चक्षुःपदमुदीरयेत् ।
तिरस्करणशब्दान्ते कुरुयुक् स्वाहयान्वितः ॥ १० ॥
पञ्चमंत्राः क्रमेणोक्ताः मकारपञ्चरक्षकाः ।
मकारपञ्चरक्षार्थं मंत्रपञ्चकमुच्चरेत् ॥ ११ ॥
ह्रीं क्लीँ[11] नमो भगवति माहेश्वरिपदं वदेत् ।
ततः सर्वजनपदं मनश्चक्षुःपदं वदेत् ॥ १२ ॥
तिरस्करणमुच्चार्य कुरुयुक् स्वाहयान्वितः ।
समस्तरक्षणाद्यर्थे षष्ठो योगः प्रकीर्तितः ॥ १३ ॥

---

1. B °रि° । 2. D चाम्ना°, D वर्त्ता° । 3. D °नं मे ततो । 4. D प्राणं । 5. N निःस्व । 6. B omits two lines. 7. N पठद्वयं । 8. CD सर्क्लीं । 9. B omits two lines. 10. B लौ°; C ञौँ । 11. B श्रीं.

मंत्रस्यास्य ऋषिः शक्तिर्गायत्री छन्द ईरितम् ।
सर्वपशुजनमनश्चक्षुरादि तिरस्कृतः ॥ १४ ॥

देवता गदिता[1] देवि[2] क्लीं बीजं परिकीर्तितम् ।
ह्रीं शक्तिः क्रीं[3] कीलकं स्याद्विनि[4]योगस्ति[5]रस्कृतौ ॥ १५ ॥

वाङ्मायाकमलाकामैरंगुष्ठाभ्या नमो वदेत् ।
बीजं[6] भगवति तत्र[7] तर्जन्यां[8] विन्यसेत्सुधीः[9] ॥ १६ ॥

माहेश्वरी मध्यमाभ्यां सर्वा तिरस्करणी[10] ततः[11] ।
अनामिकां गदिताभ्यां[12] कनिष्ठाभ्यां कुरुद्वयम्[13] ॥ १७ ॥

बीजानि तु पुनः स्वाहा करपृष्ठयुगे न्यसेत् ।
एवं हि हृदये न्यस्य वर्णन्यासं समाचरेत् ॥ १८ ॥

[14]दक्षबाहौ दक्षपृष्ठे दक्षोरौ दक्षजानुनि ।
दक्षपादे दक्षमस्तेऽप्येवं वामेऽपि विन्यसेत् ॥ १९ ॥

बाहुमूलं पृष्ठजानुमस्तके न्यस्य वै मनुम् ।
सम्पूर्णविद्यया देवि व्यापकन्यासमाचरेत् ॥ २० ॥

ततो ध्यायेन्महाविद्यां तिरस्करणरूपिणीम् ।
मुक्तकेशी विवस[15]नां सर्वालङ्कारलङ्कृताम् ॥ २१ ॥

स्व * * दर्शनान्मुग्ध[16]पशुवर्गा नमामि ताम् ।
निग्रहार्थे महाध्यानं यथावदवधारय ॥ २२ ॥

श्यामवर्णा मदा[17]धूर्ण[18]र[19]क्तनेत्रत्रयां शिवाम् ।
कृष्णाम्बरां तथा खड्गं दधतीं च भुजद्वये ॥ २३ ॥

दोर्भ्यां मनोहराभ्यां तु खर्जू[20]रीकुम्भधारिणीम् ।
नीलाश्वस्थां पुरोयान्ती नीलाभरणभूषिताम् ॥ २४ ॥

नीलमाल्यादिवसनां नीलगन्धां मनोहराम् ।
निद्रामि[21]षेण भुवनं तिरोभावं प्रकुर्वतीम् ॥ २५ ॥

खड्गायुधां भगवती भक्तपालनतत्पराम् ।
पशुनिर्मूलनोद्युक्ता पशुतर्जनमुद्रिकाम्[22] ॥ २६ ॥

तिरस्करणिकां प्रोक्ता भूर्जपत्रे लिखेन्मनुम् ।
कुम्भाग्रे स्थापयेद्देवि लिखितं कुङ्कुमादिना ॥ २७ ॥

---

1. B omits. 2. B omits. 3. B श्रीं । 4. D °द्विति° । 5. DN °स्तुति° । 6. B adds नमो । 7. B omits. 8. B °नीं । 9. D ततः स्वाहा न्यसेत्सुधीः । 10. B °णान्तः । 11. B शिवे । 12. C °मिकौ नि.; N °मिका नि° । 13. B °युक् । 14. C omits four lines. 15. C °द° । 16. B °रावत्° । 17. B °हा° । 18. CN °र्णा । 19. B वत्क° । 20. D °ज्ज° । 21. D °रो° । 22. C पट्टिका ।

जपेल्लक्षं महामन्त्रं संस्यानैकतमे[1] शिवे ।
दशांशं हवनं कार्यं बिल्वैर्मधुघृतप्लुतैः ॥ २८ ॥

तद्दशांशं तर्पणं च तद्दशांशं च मार्जनम् ।
ब्राह्मणानां भोजनं च दशांशेन[2] समाचरेत्[3] ॥ २९ ॥

एवं सिद्धमनुर्मन्त्री तिरस्करणमाचरेत् ।
सर्वसाध्यकरी विद्या पशूनामान्ध्य[4]कारिणी ॥ ३० ॥

स्वप्नवाराहिवद्दे[5]वि पुरश्चर्याविशेषकौ ।
इति संक्षेपतः प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ॥ ३१ ॥

**श्रीदेव्युवाच ।**

देवेश श्रोतुमिच्छामि कौतुकानि महान्त्यपि ।
[6]तन्मे वद दयापार यद्यहं तव वल्लभा ॥ ३२ ॥

**श्रीशिव उवाच ।**

रहस्यादतिगोप्यं च कथ्यते श्रृणु साम्प्रतम् ।
स्वप्नवाराहिका विद्या त्रिधाऽत्र परिकीर्तिता ॥ ३३ ॥

आदौ पंचदशी विद्या ततोष्टाद[7]शवर्णगा ।
चतुर्विंशतितत्त्वाढ्या[8] महती परिकीर्तिता ॥ ३४ ॥

सर्वश्रेष्ठ[9]कौतुकाढ्या तन्मध्येऽष्टादशाक्षरी ।
तस्या मंत्रविधानं च कथ्यते श्रृणु साम्प्रतम् ॥ ३५ ॥

वाग्भवं भुवनाह्वद्वै[10] वाराही तु ततो वदेत् ।
अघोरेति समुद्धृत्य स्वप्ने च ठ[11]चतुष्टयम् ॥ ३६ ॥

वह्निजायातिको मंत्रो भविष्यादिप्रदर्शकः * ।
अष्टादशाक्षरः प्रोक्तो ऋषिरीश्वर ईरितः ॥ ३७ ॥

अनुष्टुप् छन्द इत्युक्तं स्वप्नेशी देवता मता ।
ऐं बीजं ह्रीं तथा शक्तिः ठठ[12]स्वाहांतषट्ककम्[13] ॥ ३८ ॥

हृदये ऐं तथा माया नमो वाराहि वै शिरः ।
अघोरे चेति च शिखा स्वप्ने वै कवचं भवेत् ॥ ३९ ॥

ठ[14]चतुष्कं भवेन्नेत्रै स्वाहेत्यस्त्रं भवेत्प्रिये ।
कटिकण्ठगण्डकर्णनेत्रमूर्धसु[15] विन्यसेत् ॥ ४० ॥

1. B षण्मासमेकतां, D षण्मास व्यतसं; । 2. BD तद्दशांशं । 3. B च कारयेत् । 4. B °नां मान्द्य° । 5. C °का दे° । 6. D omits this line. 7. B तः षोड° । 8. N °नि; CD च । 9. B °ष्ठा । 10. B द्वौ; C °द्वै । 11. N स्वयमेव; CD ठठ° । 12. N ठठः । 13. B °ळ° । 14. N व° । 15. D र्नि सु° । * The Mantra is restored in D as follows–ऐं ह्रीं नमो वाराही अघोरस्वप्ने ठ ठ ठ ठ स्वाहा ।

नीलाञ्जनगिरिश्यामां मणिरत्नविभूषिताम् ।
अश्वारूढां चक्रहस्तामपरे च हलायुधाम् ॥ ४१ ॥

अधस्थयोः कर्तरीं च कपालं रक्तपूरितम् ।
पादाधःस्थ[1]हिरण्याक्षं रतमाणां[2] मदोद्धताम्[3] ॥ ४२ ॥

नानाशक्तिसमाकीर्णां नाना[4]गणविराजिताम् ।
एवं ध्यात्वा विष्णुशक्तिं ततः पूजनमारभेत् ॥ ४३ ॥

आराधयेद्बिन्दुमध्ये देवीं त्र्य[5]स्रं ततो लिखेत् ।
तत्र निद्रां सुप्रसन्नां डिम्भाङ्गीं[6] च प्रपूजयेत् ॥ ४४ ॥

ततः षट्कोणमध्ये तु महोग्रां प्रेतयक्षिकाम्[7] ।
श्वासकालां भीमवतीं नखज्वालां महोदरीम् ॥ ४५ ॥

ततोऽष्टदलमध्ये तु गिरीशं[8] चतुराननम् ।
फट्[9]कारं ब[10]द्धमातङ्गं[11] कुलीरं वायसं बलिम् ॥ ४६ ॥

चण्डी[12]श्वरं च संपूज्य ततो द्वादशवर्णके ।
मातङ्गीं वृद्धमातङ्गीमसिताङ्गीं कफोत्कटाम् ॥ ४७ ॥

महोद्धतां प्रेतवा[13]हां ज्ञानशक्तिं क्रियावतीम् ।
वगलि[14]कां भानुमतीं सोमदेवीं[15] चिरन्तनीम् ॥ ४८ ॥

ततः पूज्य[16] षोडशारे संहारेणैव पू[17]र्वतः ।
एन्द्रीं सौरीं महेशानीं तारां यक्षप्रसूं धराम् ॥ ४९ ॥

वामां विरोधिनी[18] श्यामां मातङ्गीं सुरराक्षसीम् ।
पद्मावतीं काल[19]रात्रिं तामसीं मदनां मदाम् ॥ ५० ॥

पीतगन्धाक्षतैः[20] पूज्या तथैव कुलवस्तुभिः ।
संयुक्तः शक्तिभिः सार्धलक्षमेकं जपेन्मनुम् ॥ ५१ ॥

हयमार[21]स्य कुसुमैर्हयारिपलैस्तथा ।
दशांशं जुहुयान्मन्त्री त्र्यस्रे वा योनिकुण्डके ॥ ५२ ॥

तर्पणं मार्जनं कुर्याद्योगिनीनां समर्चनम्[22] ।
एवं सिद्धमनुर्मन्त्री प्रयोगान्साधयेच्छुभान् ॥ ५३ ॥

मध्वाज्यसुरसाभिश्च होमो दर्शयते हरिम् ।
अष्टोत्तरसहस्रेण साधकस्येप्सितं वदेत् ॥ ५४ ॥

---

1. B °स्ती, N °स्थो । 2. D °ला । 3. B °द्धुतं । 4. D वाला° । 5. B अ° । 6. B °रिनार्गी; D जिताङ्गीं । 7. C °पक्षया । 8. N दिटीशं; C झिंटीशं; D दिण्डीशं । 9. D फट्; C कं°; B वत्° । 10. B बं° । 11. B °र्गो । 12. B वागी° । 13. DN °व° । 14 N गोलिपा°; D गोनिष्पा° । 15. D °जीवं । 16. C °ज्या । 17. B प° । 18. CDN वायवी बोधिनीं । 19. D कला° । 20. C °सनैः; D सवैः । 21. C °न° । 22. C °ने ।

कदम्बपुष्पै[1]र्होमस्तु निधानं निधि दर्शयेत् ।
नीलोत्पलकृतो होमः[2] स्त्रियमाकर्षयेद्धठात् ॥ ५५ ॥
जवापुष्पैः कालखण्डै[3]र्होमो भूपं वशं नयेत् ।
मार्जारान्त्रैः[4] कृतो होमस्त्रासयेत् साधकार्थिनम् ॥ ५६ ॥
पुत्रा[5]जीवकबीजैश्च होमः पुत्रकरो भवेत् ।
यस्य प्रतिकृति कृत्वा मापपिष्ट[6]मयीं शुभाम् ॥ ५७ ॥
जुहुयात्तस्य भवति सद्यो मृत्युर्न संशयः ।
सहस्रत्रितयं जप्त्वा[7] स्वप्ने[8] वक्ति शुभाशुभम् ॥ ५८ ॥
जाङ्गलैः पलैर्होमः किं तत्कार्यं[9] न साधयेत् ।
तारे नमो भगवति वाराहि द्वितयं ठठः[10] ॥ ५९ ॥
पञ्चद[11]शाक्षरो मंत्रः सद्यः प्रत्ययकारकः ।
अक्षोभ्यो भैरवः[12] प्रोक्तः छ[13]न्दस्तु शङ्करि[14] मतम्[15] ॥ ६० ॥
देवता स्वप्नवाराही षडंगानि पदैः क्रमात्[16] ।
प्राग्वत् पूजादिकं देवि प्रयोगश्चापि पूर्ववत् ॥ ६१ ॥
बीजान्ते भुवनेश्वर्या अंकुशं बीजमुच्चरेत् ।
वार्तालीति पदद्वन्द्वं वाराहीद्वितयं[17] तथा ॥ ६२ ॥
स्वप्नेश्वरि युगं तस्मादैन्दवी बिंदुभूषिताम् ।
वा[18]युं बिंदुयुतं पश्चाच्चतुर्विंशाक्षरो मनुः ॥ ६३ ॥
जनार्दनो ऋषिश्चास्य छंदः संस्कृतिरीरितम ।
देवतां स्वप्नवाराही रक्तश्या[19]वर्णलोचनाम् ॥ ६४ ॥
स्मरोद्दिन्ना त्रिनयनां खण्डेन्दु[20]कृतशेखराम् ।
दंष्ट्राकरालवदना शिरोमालाविभूषिताम् ॥ ६५ ॥
यजेत्पूर्वोदिते पीठे सर्वकालफलप्रदाम् ।
अत्रैव कृष्णमातङ्गिकौतकं शृणु पार्वति ॥ ६६ ॥
प्रणवं पूर्वमुद्धृत्य नमो भगवतीति वै ।
कृष्णमातगि[21]नि शिरोवल्कलधारिणि चोद्धरेत् ॥ ६७ ॥
सर्वजनम[22]हंकरि[23] माया षट् दीर्घयुक् ततः ।
अमुकं पदमुद्धृत्य मे वश्याकृ[24]ष्टिमुच्चरेत् ॥ ६८ ॥

---

1. B omits होमस्तु...कृतो in the second line. 2. B omits स्त्रियं...होम in the third line. 3. D °खड्गै° । 4. D °रपत्रैः । 5. B °त्र° । 6. D मांसपिण्ड° । 7. D °प्य । 8. B °प्नं । 9. CD किं कि कार्य । 10. D द्विठ. । 11. B चतुर्द°; D दशाक्ष° । 12. C भैरवोऽस्य ऋषिः । 13. B ऋषिच्छ° । 14. B शंकरि; D शर्करी । 15. C मता । 16. B पृथक् । 17. B हीति द्वयं; D हीति पदं । 18. N चा; D आ° । 19. B °वां । 20. B खंडं; D खड्गेन्दु° । 21. B °ग° ! 22. N °मा° । 23. D मे वशंकरि । 24. DN °वृ° ।

कुरु स्वाहान्वितो मंत्रः सर्वेषां सुरपादपः।
ऋषिः कृष्ण इति ख्यातः सर्वदेवोत्तमोत्तमः ॥ ६९ ॥

विराट् च्छन्द इति ख्यातं[1] मायया तु षडङ्गकम्।
ॐ बीजं भुवना शक्तिः स्वाहा कीलकमीरितम्।
त्रैलोक्य[2]वश्यार्थमथ[3] विनियोगः प्रकीर्तितः ॥ ७० ॥

वीणावादनकोविदाम्बुदघटा लावण्यलीला [4]वरा
बिम्बोष्ठी वनजाक्षिमञ्चि[5]ततनू व्याकीर्णकेशस्रजा[6]।

लीलालोलसुवर्णकुण्डलधरा धर्मार्थकामोदया
चण्डी चण्डपराक्रमा भवतु नः सर्वार्थसंसाधिका ॥ ७१ ॥

एवं ध्यात्वा जपेल्लक्षं ततः सिद्धो भवेन्मनुः।
उच्छिष्टहस्तः प्र[7]जपेत् उच्छिष्टेण[8] बलि चरेत्[9] ॥ ७२ ॥

एवं प्रजपतस्तस्य सिद्धयो जनवश्यता।
जायते देवदेवेशि किं पुनः श्रोतुमिच्छसि ॥ ७३ ॥

इति श्रीशक्तिसङ्गममहातन्त्रराजे उत्तरभागे तृतीयखण्डे श्रीमदक्षोभ्यमहोग्रतारासंवादे
तिरस्करणिकाविधिर्नामैकोनविंशः[10] पटलः।

1. B °तो। 2. D °क्यदेवी°। 3. D °श्यार्थ। 4. C °व°; N °म्ब°। 5. C जीक्षिमुच्च°; B मक्षिमुचतु, N जाक्षिञ्च°। 6 N °व्रजां, B °त्रय, C °के सव्रती। 7. B स°। ८. D दुष्टचित्ते। 9. CD हरेत्। 10. B अष्टादशः।

## विंशतितमः पटलः ।

### श्रीशिव उवाच ।[1]

कामं शक्रपदारूढं रतिबिन्दु[2]समन्वितम् ।
वाग्भवं बीजमुद्धृत्य पराप्रासादमुद्धरेत्[3] ॥ १ ॥

अनुलोमविलोमेन प्रोक्ता सम्पत्सरस्वती ।
षडक्षरी महाविद्या सर्वविद्योत्तमोत्तमा * ॥ २ ॥

दीनानां तु दरिद्राणां गता[4]धिकारिणां तथा ।
सम्पत्सरस्वती विद्या महासम्पत्तिदायिनी ॥ ३ ॥

कृष्णो[5] ऋषिर्महेशानि गायत्री च्छन्द ईरितम् ।
सम्पत्सरस्वती देवी देवता परिकीर्तिता ॥ ४ ॥

ऐँ बीजं क्लीं तथा शक्तिः हसौः[6] कीलकमीरितम् ।
सम्पत्यर्थे महेशानि विनियोगः प्रकीर्तितः ॥ ५ ॥

षडक्षरेण देवेशि षडङ्गन्यासमाचरेत् ।
व्यापकं नवधा कृत्वा ध्यायेद्देवीं मनोहराम् ॥ ६ ॥

अनेककोटिमातङ्गतुरङ्गरथपत्तिभिः[7] ।
सेवितामरुणाकारां वन्दे सम्पत्सरस्वतीम् ॥ ७ ॥

इति ध्यात्वा महेशानि त्रिकोणं चक्रमालिखेत् ।
षट्कोणं च ततो लेख्य[8] वृत्ताष्टदलभूषितम् ॥ ८ ॥

भूपुरेण समायुक्तं यंत्रं सम्पन्मनोमतम् ।
सम्पत्सरस्वतीं देवीं त्रिकोणे[9] परिपूजयेत् ॥ ९ ॥

दलेष्ट[10]मातृकाः पूज्या भैरवेण समन्विताः ।
चतुरस्रे लोकपालाः[11] तदस्राणि च तद्बहिः ॥ १० ॥

एवमावरणान्पूज्य जपेल्लक्षत्रयं शिवे ।
दशांशेन महेशानि पा[12]लाशकुसुमैर्हुनेत् ॥ ११ ॥

पुरश्चरणसम्पन्नो प्रयोगार्हो न चान्यथा ।
लक्षमेकं जपेन्मंत्रं दशांशं पायसैर्हुनेत् ॥ १२ ॥

अश्वसाहस्रसंपन्नो[13] राजा भवति भूतले ।
षट्सहस्रं जपेन्नित्यं दशांशं कमलैर्हुनेत् ॥ १३ ॥

---

1. B श्रीदेव्युवाच, श्रीमहादेव उवाच, CN श्रीदेव्युवाच । 2. B °बीज° । 3. D °च्च° । 4. B गाना° । 5. N एवो, D काश्यप । 6. N ह्रौ ; B ह्रौः; C ह्रौं । 7. D पंक्तिभिः । 8. D लिख्य । 9. D °णा° । 10. B °षु । 11. B °लान् । 12. B प° । 13. CD °युक्तो । * D restores the Mantra as क्लीं ऐं ह्सौः ह्सौः ऐं क्लीं ।

मातङ्गरथवृन्दाश्च[1]धनधान्यसमन्वित.[2] ।
तस्य संवत्सराल्लक्ष्मीरचला जायते ध्रुवम् ॥ १४ ॥
सहस्रं जुहुयान्नित्यं[3] अनले शालितण्डुलैः ।
मण्डलान्नात्र सन्देहो भूपतित्वमवाप्नुयात् ॥ १५ ॥
बिल्वमूले जपेन्मन्त्री नित्यं दशसहस्रकम् ।
[4]मासाद्धात्तिसकलां लक्ष्मीं प्राप्नोति साधकः पराम्[5] ॥ १६ ॥
हुने[6]द्बिल्वसमिद्भिर्यो तन्मूलेऽष्टोत्तरं शतम् ।
तद्गृहे महदैश्वर्यं त्रिभिर्मासैर्भवेदपि ॥ १७ ॥
दशवारं स्पृशेदन्नं जप्त्वा भुंक्ते नरो यदि ।
तद्गृहेऽन्नसमृद्धिः स्यादक्षयं नात्र संशयः ॥ १८ ॥
नदीतीरे जपेन्मन्त्रमेकाग्रमनसा शुचिः ।
दशांश गोघृतं हुत्वा वशीकुर्याज्जगत्त्रयम् ॥ १९ ॥
घृतेन जुहुयान्नित्य चतुःस[7]हस्रमादरात् ।
अणिमादिगुणैश्वर्यं मासादाप्नोति साधकः ॥ २० ॥
इति संक्षेपतः प्रोक्तं शृणु मृत्युञ्जयं शिवे ।
प्रणव पूर्वमुद्धृत्य काष्ठ षष्ठस्वरान्वितम्[8] ॥ २१ ॥
बिन्दुयुक्तं महेशानि चन्द्रबिन्दुसम[9]न्वितम् ।
क-पंचविंशति पश्चाद्बिन्दुयुक्तं महेश्वरि ॥ २२ ॥
नाद्यं[10] दीर्घ[11]समायुक्तं शक्रबीजं च मारुतम् ।
मारुतं दीर्घसंयुक्तं मही[12] वायुमथोच्चरेत् ॥ २३ ॥
दशार्णो[13]ऽयं महाविद्या कालमृत्युविनाशिनी ।
वामदेवो ऋषिश्चास्य पङ्क्तिश्छन्दः प्रकीर्तितम् ॥ २४ ॥
मृत्युञ्जयो महारुद्रो देवता परिकीर्तिता ।
प्रणव बीजमित्युक्तं जूं[14] शक्तिः परिकीर्तिता ॥ २५ ॥
चन्द्रचन्द्रं चन्द्रवह्निः पुनर्वह्नि क्रमेण च ।
इति मन्त्राक्षरैर्न्यासं कृत्वा ध्यायेत्परं शिवम् ॥ २६ ॥
अच्छस्वच्छारविन्दस्थितिमुभयकराङ्क[15]स्थित पूर्णकुम्भम्
द्वाभ्यां वेदा[16]क्षमाले निजकरकमलाभ्यां घटौ[17] नित्यपूर्णौ ।
द्वाभ्यां तावत्स्रवन्तौ[18] शिरसि शशिकलां बन्धुरा[19] प्लावयन्तौ
[20]एवं देवं दधानः प्रविशति विशदां कल्पजालश्रियं[21] नः[22] ॥ २७ ॥

1. D च । 2. D समाहितः । 3. C षट्सहस्रं तु जुहुयात् । 4 B omits this line. 5. D च साधकः । 6. B जुहुया° । 7. D °सा° । 8. B काष्ठमं षट्समन्वितां । 9. B युगा° । 10. D °त्य° । 11. N °क्षीर्य° । 12. D मा° । 13. B °र्णे° । 14. CDN जुं । 15. CN सं°, D ख° । 16. CN चा° । 17. CD °टी । 18. C द्वौ तौ च स्रवणौ । 19. CDN बिन्दुरा° । 20. BCN omit. 21. DN श्रियं । 22. C श्रियन्तः ।

एवं ध्यात्वा बाह्य[1]पीठे षट्कोणं त्रिलिखेच्छिवे ।
दलाष्टकं लिखेत्तत्र वृत्तं तत्र लिखेत्ततः ॥ २८ ॥

षट्कोणमध्ये देवेशि यजेन्मृत्युञ्जयं शिवम् ।
कोणषट्के[2] च सत्या[3]दि मन्त्रा[4]न् पञ्च[5] सदाशिवम् ॥ २९ ॥

ततो यजेल्लोकपालान्सायु[6]धान्परमेश्वरि ।
लक्षं जपेत्पुरश्चर्या तिलैर्होमो दशांशतः ॥ ३० ॥

अनन्तरं जपेल्लक्षत्रितयं परमेश्वरि ।
काल[7]मृत्युविनाशश्च भवत्येव न चान्यथा ॥ ३१ ॥

[8]पर्वताग्रे जपेद्देवि लक्षद्वादशकं शिवे ।
कल्पायुः शतजीवी च भवत्येव न चान्यथा ॥ ३२ ॥

अयुतं होमयेद्देवि दूर्वया मृत्युनाशने ।
इति संक्षेपतः प्रोक्तं पथिषद्रुद्रकं शृणु[9] ॥ ३३ ॥

प्रणवं नति[10]मुच्चार्य रुद्राय पदमुच्चरेत् ।
पथिषद्पदमुच्चार्य चतुर्थ्यन्तसमन्वितम् ॥ ३४ ॥

[11]स्वस्तीत्युक्त्वा मां रक्ष च[12] संपालय पद ततः ।
पथिषद्रुद्रविद्येयं श्रुता पथि भयापहा ॥ ३५ ॥

वामदेवोऽस्य मंत्रस्य ऋषिरित्युच्यते बुधैः ।
पंक्तिश्छन्द इति प्राहुर्गायत्रमथवा शिवे[13] ॥ ३६ ॥

देवता पथिषद्रुद्रो मार्गे सकलभीतिहा ।
प्रणव बीजमित्युक्त नमः शक्तिरितीरिता ॥ ३७ ॥

एकाक्षरेण द्वाभ्या च त्रिभिश्च चतुरक्षरैः ।
त्रिभिश्चतुर्भिरित्युक्तो षडङ्गोऽयं मया[14]शिवे ॥ ३८ ॥

शुद्धस्फटिकसंङ्काशं चतुर्बाहुसमन्वितम् ।
पिनाककार्मुकोपेतं बाणटङ्कसमन्वितम् ॥ ३९ ॥

त्रिभिर्मंत्रैः समोपेतं ए[15]णाङ्कचन्द्रशेखरम् ।
कैलासगिरिसङ्काशं वृषभारूढमीश्वरम् ॥ ४० ॥

अन्नपूर्णेश्वरी[16]युक्त पथिषद्रुद्रनामकम् ।
पथि चोरादि[17]भीतिघ्नं ध्यायेद्दे[18]वं सदाशिवम् ॥ ४१ ॥

---

1. B ब्रह्म° । 2. B °द् । 3. B साद्या° । 4. B °न्त्री । 5. NB °न्येः । 6. B °नायु° । 7 N °ले । 8. D omits two lines. 9. B किमन्यच्छ्रोतुमिच्छसि । 10. D पूर्व° । 11. B adds पथिषद्रुद्रकं शृणु before this. C omits nine lines. 12. B माक्षरं च । 13. D प्रिये । 14. B °द्दा° । 15. C ऋ° । 16. B °रा । 17. B °रि° । 18. N °द° ।

ध्यानमेतन्मया प्रोक्तं यंत्रं वच्मि ततः परम् ।
षट्कोणं विलिखेदादौ दलान्यष्टौ ततो लिखेत् ॥ ४२ ॥

भूगृहं विलिखेत्पश्चाद्द्वारोपेतं सुलक्षणम् ।
षडस्रमध्यमे देवं[1] पथिषड्रुद्रमर्चयेत् ॥ ४३ ॥

षट्कोणेषु षडङ्गानि तत्र[2] मन्त्रैः समर्चयेत् ।
नन्दीकेशश्च[3] नन्दी च भृङ्गी च भृङ्गिरीटि वै ॥ ४४ ॥

मृड[4]श्च वीरभद्रश्च कुमारो गण[5]पस्तथा ।
अष्टपत्रे यजेदेताः[6] प्रार्थयेन्मम वल्लभे ॥ ४५ ॥

दिक्ष्वष्टसु महीगेहे दिक्पालानष्ट पूजयेत् ।
एवमावरणैर्युक्तं पथिषड्रुद्रमीश्वरम् ॥ ४६ ॥

पूजयित्वा जपेन्मन्त्रं चतुर्लक्षमतन्द्रितः ।
दशांशं तु तिलैर्हुत्वा मन्त्रः सिद्धो भविष्यति ॥ ४७ ॥

सिद्धेनानेन मन्त्रेण प्रयोगं कारयेद्बुधः ।
पथि चोरभये प्राप्ते जपेदष्टोत्तरं शतम् ॥ ४८ ॥

ततश्चौरैरदृश्यः स्यात् पुमानयमसंशयः ।
पिपासासंयुते मार्गे विजने साधकोत्तमः ॥ ४९ ॥

[7]जपेदमुं महामंत्रं वसुपूर्व[8]शतत्रयम् ।
तत्रैव लभते सद्यो [9]जलं पीयूषसन्निभम् ॥ ५० ॥

अन्नेन रहितो मार्गे क्षुधासंपीडितो नरः ।
जपेदमुं महामंत्रमष्टोत्तरसहस्रकम् ॥ ५१ ॥

मिष्टान्नं लभते सद्यो ब्राह्मणाना शतस्य च ।
रहस्यातिरहस्यं च रहस्यातिरहस्यकम ॥ ५२ ॥

गोपनीयं कौतुकं हि स्वयोनिरिव पार्वति ।
इति संक्षेपतः प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ॥ ५३ ॥

इति श्रीशक्तिसङ्गममहातन्त्रराजे उत्तरभागे तृतीयखण्डे श्रीमदक्षोभ्यमहोग्रतारासंवादे
पथिषड्रुद्रविधिर्नाम विंशतितमः पटलः ।

1. CN °यं । 2. ND °त्र, C °तु । 3. D °श्वर° । 4. C मुण्ड° । 5. B जन° । 6. B °द्देवता, C °दवि । 7. N omits three lines. 8. D °र्वं । 9. D omits जलं......सद्यो in the fourth line.

## एकविंशतितमः पटलः ।

**श्रीदेव्युवाच ।**

देवेश श्रोतुमिच्छामि कौतुकं शत्रुनिग्रहम् ।

**श्रीशिव उवाच ।**

रहस्यातिरहस्यं च कौतुकं कथ्यते शृणु ॥ १ ॥
आर्द्र[1]पटे[2]श्वरी विद्या कथ्यते शत्रुनिग्रहे ।
प्रणवं पूर्वमुद्धृत्य नमो भगवतीति च ॥ २ ॥
आर्द्रपटे[3]श्वरि प्रोच्य हरिनील[4]पदं वदेत् ।
कालिपदं ततोच्चार्य[5] आर्द्रजिव्हे पदं वदेत्[6] ॥ ३ ॥
चण्ड[7]लोहिनि चोद्धृत्य रुद्राण्यथ कपालिनि ।
ज्वालामुखि सप्त[8]जिव्हे सहस्रनयने वदेत् ॥ ४ ॥
एहियुक् चामुकं ते[9] च पशुं ददामि वै वदेत् ।
अमु[10]ष्यजीवमुद्धृत्य निकृन्तपदमुद्धरेत् ॥ ५ ॥
अथाहितजीवपदम[11]पहारिणि हूं वदेत् ।
फट् भूर्भुवः स्वः पदं च फट्[12]स्वाहा रुधिर पिब ॥ ६ ॥
मा[13]रवादिनि चोद्धृत्य मम शत्रुंपदं वदेत् ।
छेदयद्वितयं प्रोच्य पिबद्वन्द्व समुद्धरेत् ॥ ७ ॥
शोणितं च[14] पदं हूं फट् स्वाहान्तो मनुराडयम् * ।
व्यञ्जनत्रितयाक्रान्तं शतं विंश[15]त्र्याधिकम्[16] ॥ ८ ॥
दुर्वासा[17] ऋषिराख्यातो गायत्री छन्द ईरितम् ।
निकृन्त[18] इति बीजं स्यात्स्वाहा शक्तिः समीरिता ॥ ९ ॥
शत्रुनिग्रहकार्यार्थे विनियोगः प्रकीर्त्तितः ।
ह्रीं[19]षट्कैस्तु षडङ्गानि ततो ध्यायेत्पराम्बिकाम् ॥ १० ॥

शितोग्रतर[20]दंष्ट्रिका त्रिनयनोर्द्धकेशोल्बणा (?)
  व
कपालफलसो[21]स्थ[22]सड्डमरुकत्रिशूलाङ्किता ।
घनाघननिभारुणारुणितकिङ्किणीमालिका
भवेद्धवसुसिद्धये मम तु भद्रकाली चिरम् ॥ ११ ॥

---

1. B °र्धं° । 2. B °र°; C °ह्रे° । 3. B °र°; C °ह्रे° । 4. D °लीन° । 5. BCN omit. 6. C चरेत् । 7. N °न्द्र° । 8 B ललज्° । 9. D °कान्ते । 10. B आयु° । 11. D °दं स्व° । 12. D omits स्वाहा......हूं फट् in the fourth line. 13. B शा° । 14. B प्रेद°; N मेद°; C मेद° । 15. B शत्रु° । 16. D °न्तिकाः । 17. B °स° । 18. B °ति । 19. B ह्रां° । 20. N °ग्रे । 21. B परशो° । 22. D °ल्ल° ।

* Following the MSS D the long Mantra may be restored as—ओं नमो भगवति आर्द्रपटेश्वरि हरिनीलकालि आर्द्रजिव्हे चण्डलोहिनि रुद्राणि कपालिनि ज्वालामुखि सप्तजिव्ह सहस्रनयने एह्येयहि अमुकं ते पशुं ददामि अमुष्यजीवं निकृन्त अहितजीवापहारिणि हूं फट् भूर्भुवः स्वः फट् स्वाहा रुधिरं पिब मारवादिनि मम शत्रुं छेदय छेदय पिब पिब शोणितं हूं फट् स्वाहा ।

अयुतं प्रजपेन्मन्त्रं मरुभूमौ श्मशानके ।
स्नानं कृत्वा चार्द्रवासः[1] शत्रुमुद्दिश्य योजयेत् ॥ १२ ॥

क्षणार्धाच्छत्रुमरणं भवत्येव जपे कृते ।
केवलं जपमात्रेण मासान्ते शत्रुमारणम् ॥ १३ ॥

कृष्णाष्टमीं समारभ्य यावत्कृष्णचतुर्दशी ।
शत्रुनामसमायुक्तस्तावत्कालं जपेन्मनुम् ॥ १४ ॥

यमालये व्रजेच्छत्रुर्मुकुन्दसदृशोऽपि चेत्[2] ।
आरम्भदिवसाद्देवि ब्रह्मरुद्रादयः सुराः[3] ॥ १५ ॥

न रक्षितुं प्रशक्ता[4]स्ते मृत्युस्तस्य भविष्यति ।
कृष्णप्रतिपदारभ्य यावत्स्याद्दशमी तिथिः ॥ १६ ॥

मंत्रमुच्चार्य देवेशि शत्रुदेशे जलं क्षिपेत् ।
गृहीत्वाञ्जलिना नीरं शत्रुदेशे क्षिपेज्जलम् ॥ १७ ॥

मारयेच्छत्रुमज्ञातं[5] नात्र कार्या विचारणा ।
शत्रुनाम समुच्चार्य मनुना परदेवते ॥ १८ ॥

अष्टोत्तरशतं जप्त्वा शत्रुनाशो भवेद्ध्रुवम् ।
देवानां बृहतीपुष्पैर्मूलेन नियतव्रतः ॥ १९ ॥

उपचारैः षोडशभिर्माष[6]नैवेद्यमर्पयेत् ।
कार्यं विज्ञाप्य प्रजपेच्छत्रुनाशो भविष्यति[7] ॥ २० ॥

इति संक्षेपतः प्रोक्तं वार्तायक्षीं शृणु प्रिये ।
प्रणवं वाग्भवं माया श्रीबीजं ज्योतिर्बीजकम् ॥ २१ ॥

अङ्कुशं[8] भृगुबीजं च मुखवृत्तं सबिन्दुकम् ।
चतृतीयं[9] बिन्दुयुक्तं[10] वीरमोद[11]नमुद्धरेत् ॥ २२ ॥

आग्नेयी[12] पदमुद्धृत्य महावीरे पदं वदेत् ।
सर्वभावपदं प्रोच्य दर्शि[13]नीति पदं वदेत् ॥ २३ ॥

[14]उक्त्वा नन्दनवनपदं वासिनीतिपदं वदेत् ।
[15]महासुखपदं प्रोच्य जागरिणीपदं वदेत् ॥ २४ ॥

मम कर्णे दर्शयेति स्वाहान्तो मनुराडयम् ।
रविवारे पर्वणि वा तैलाभ्यङ्गं[16] समाचरेत् ॥ २५ ॥

---

1. D °सा: । 2. D च । 3. B °यरु य. । 4. B °रता° । 5. BD °संन्धानं । 6. N °प; D °र्भाष° । 7. DN °वेच्छिवे । 8. CN °शा; D °शो । 9. C तृतीयं च । 10. CN °तं । 11. CN °ह° । 12. C ग्रेये, D ये ये । 13. CD °र्शि° । 14. D omits two lines. 15. C omits this line. 16. B °ङ्गैः ।

अयुतं प्रजपेन्मन्त्रं[1] तिलपुष्पेण होमयेत् ।
अपराह्ने सहस्रं च त्वष्टोत्तरशतं च वा[2] ॥ २६ ॥

जप्त्वा सुप्ते नरे रात्रौ सर्वं कथयति प्रिये ।
त्रैकाल्य[3]ज्ञानसिध्यर्थं करिष्येऽहं जपं तव[4] ॥ २७ ॥

इति सङ्कल्पमासाद्य जपात्त्रैकाल्य[5]माप्नुयात् ।
इहाफलं फलं चैव पराफलं च आफलम् ॥ २८ ॥

जानामि इति सम्प्रोच्य सिद्धमंत्रो नरो भवेत् ।
ऋषिश्छन्दादिकं ध्यानं नास्ति चास्याः प्रियंवदे ॥ २९ ॥

इति संक्षेपतः प्रोक्तं पिशुनस्य मनुं शृणु ।
श्रीबीज चापरां[6] प्रोच्य शतरुद्रपदं वदेत् ॥ ३० ॥

सौ[7]प्रस्तांगी[8]पदं प्रोच्य ततः सफ[9]लशब्दतः ।
वार्ता कहपदं प्रोच्य ततः कर्णपदं वदेत् ॥ ३१ ॥

पिशुनाख्य[10]पदं प्रोच्य मायास्वाहान्वितो मनुः । *
मंत्रराजः समाख्यातः सहस्रेण पुरस्क्रिया ॥ ३२ ॥

सह[11]देव ऋषिश्चास्य अनुष्टुप् च्छन्द ईरितम् ।
श्रीमत्कर्णाख्यपिशुनो महालक्ष्मी च देवता ॥ ३३ ॥

वाग्भवं बीजमाख्यातं शक्तिः स्यात्कामबीजकम् ।
पराबीजं कीलकं स्यान्मम शब्दं समुच्चरेत् ॥ ३४ ॥

सकलेति पदं प्रोच्य रहस्यपदमुद्धरेत् ।
वाग्विज्ञानार्थेति पद विनियोगः प्रकीर्तितः ॥ ३५ ॥

ह्रीं[12]षट्कैश्च षडङ्गानि व्याहृत्या दिग्वि[13]बन्धनम् ।
अनेन क्रमयोगेन पिशुनः सर्वसिद्धिदः ॥ ३६ ॥

इति संक्षेपतः प्रोक्तं किरातपदपूर्विका[14]म् ।
वाराहीं शृणु देवेशि सावधानमना भव ॥ ३७ ॥

वाग्भवं बीजमुद्धृत्य वाराहीबीजमुद्धरेत् ।
श्रीबीजं च ततस्तारं नमो भगवतीति वै ॥ ३८ ॥

वाराहीपदमुद्धृत्य वराहमुखि चोद्ध[15]रेत् ।
किरातरूपिणि[16] प्रोच्य एकरात्रिपदं वदेत् ॥ ३९ ॥

---

1. B °न्त्री । 2. B चत्वरेष्टोत्तरं शतं । 3. B °लोक्य° । 4. D °तः । 5. B °लोक्य° । 6. C पुरतः; D च पुग । 7. C असौ । 8. D प्रासाङ्गी° । 9. CN °क° । 10. D °र्थं । 11. D महा° । 12. B ह्रां° । 13. B °नि° । 14. C °वंकं । 15. B °च्च° । 16. B °णी । * Following D the Mantra is restored as—श्रीं ह्रीं शतरुद्र सौप्रस्ताङ्गी (?) सफलवार्त्ती वह कर्णपिशुन ह्रीं स्वाहा ।

प्रसन्नेपदमुद्धृत्य वरदेपदमुद्धरेत् ।
मम कार्यपदं प्रोच्य सिद्धि कुरुयुगं वदेत् ॥ ४० ॥

श्रीबीजं स्तंभबीजं च वाग्बीजं स्वाहयान्वितम् ।
बिभीतकं समानीय तस्य मज्जां समाहरेत् ॥ ४१ ॥

तद्भस्माञ्जनमासाद्य कज्जलं नेत्रयोर्ददेत् ।
रात्रौ धूपं ततो दत्त्वा प्रजपेत्परमेश्वरि ॥ ४२ ॥

प्रसन्ना भवति क्षिप्रं नात्र कार्या विचारणा ।
स्वप्नवाराहिवत्सर्वं श्रृणुष्व[1] कालवादिनीम्[2] ॥ ४३ ॥

प्रणव भुवनां लक्ष्मी वाग्वीजं कामबीजकम् ।
संवर्तरतिसंयुक्तं बिन्दुयुक्तं समुद्धरेत् ॥ ४४ ॥

प्रणवं हृदयं प्रो[3]च्य ततो भगवति पदम् ।
भूतमुद्धृत्य देवेशि भविष्यमुद्धरेत्ततः ॥ ४५ ॥

वर्तमानपदं प्रोच्य तदन्ते कालवादिनि ।
प्रपञ्चपदमुद्धृत्य शरीरिणिपदं वदेत् ॥ ४६ ॥

सह[4]शब्दं समुद्धृत्य अमुकं मे वदेत्ततः ।
कार्यं कथयेति[5] प्रोच्य पुनर्बीजानि चोद्धरेत्[4] ॥ ४७ ॥

अयुतं प्रजपेन्मन्त्रं दशांशं हवनं चरेत् ।
आकर्षणार्थे[6] देवेशि भानुवारे यथाविधि ॥ ४८ ॥

रात्रौ तु शयनात्पूर्वं सहस्रं प्रजपेच्छिवे ।
अष्टोत्तरशतं वापि शयीत[7] तदनन्तरम् ॥ ४९ ॥

तत्स्वप्ने[8] चिंतितं कार्यं देवता कथयेद्ध्रुवम् ।
नामा[9]दिदर्शनं तत्र द्रष्टव्य विधिपूर्वकम् ॥ ५० ॥

यस्य या चिन्तिता शक्तिः समद्वारा भविष्यति ।
इति संक्षेपतः प्रोक्तं श्रृणु धूमावतीविधिम् ॥ ५१ ॥

धूँबीज[10] त्रितय[11] प्रोच्य धुरुयुग्म समुच्चरेत् ।
धूमावतिपदं प्रोच्य क्रो[12] स्वाहा फट् समन्वितः ॥ ५२ ॥

मत्रः प्राथमिकः प्रोक्तो द्वितीयं श्रृणु सादरम् ।
प्रणवं धूम्रबीज च[13] धूमावतिपद वदेत् ॥ ५३ ॥

देवदत्तो धावतीति स्वाहान्तो मनुराडयम्* ।
ऋषिः क्षपणकः ख्यातो[1] गायत्रं[2] च्छन्द ईरितम् ॥ ९४ ॥

धूमावती देवता च धूँबीजं बीजमीरितम् ।
स्वाहा शक्तिः समुच्चाटे[3] विनियोगः प्रकीर्तितः ॥ ९५ ॥

धूँषट्कैस्तु षडङ्गानि ध्यानं शृणु वरानने ।
काकारूढातिकृष्णाभा भिन्नदन्ता विरागिणी ॥ ९६ ॥

मुक्तकेशी सुधूम्रा[4]क्षी क्षुत्तृषार्ता भयातुरा ।
चचला चाति[5]कामार्ता क्लि[6]ष्टा पुष्टालसाङ्गिका ॥ ९७ ॥

मलिना श्रमनी[7]र[8]क्ता व्यक्तगर्भा विरोधिनी ।
धृत[9]सर्पाग्रहस्ता च ध्येया धूमावती परा ॥ ९८ ॥

लक्षं जपेन्महेशानि जगदुच्चाटनं चरेत् ।
सर्वतंत्रे प्रयुक्तत्वादत्र संक्षेपतो मता[10] ।
मंत्रान्तरत्वात्कथिता किमन्यच्छ्रोतुमिच्छसि ॥ ९९ ॥

इति श्रीशक्तिसङ्गममहातन्त्रराजे उत्तरभागे तृतीयखण्डे श्रीमदक्षोभ्यमहोग्रतारासंवादे धूमावतीकौतुकसंक्षेपविधिर्नो[11]मैकविंशति[12]तमः पटलः[13] ।

॥ सुन्दरीखण्डः ॥

---

* D restores this Mantra as ओं धूं धूमावति देवदत्तं धावतीति स्वाहा । 1. D प्रोक्तो । 2. D °त्री । 3. D °र्थे । 4. B °मा° । 5. B °र्ति° । 6. C कृ°, D स्वि° । 7. D सृक्किनी । 8. CN °र° । 9. B धूम° । 10. D मुदा । 11. B पान्तकथनं ना° । 12. विंशति only in BN.
13. The Post-Colophon statement as given in MS B is stated below·—

शके १७१३ विरो[धि]कृत्संवत्सरे आषाढशुक्लचतुर्थ्यां भौमवासरे पाडलिग्रामे
ग्रंथसमाप्तिरगमत् ॥ विष्णुसूनुना नारायणेन लिखित ॥ श्रीकृष्णार्पणमस्तु ॥
श्री श्री श्री श्री श्री चरणेभ्यः प्रीयतां

॥ इति सुन्दरीखण्डम् ॥